**मूल्यप्रेषणसूचना—**

२७ तमवर्षीयस्य पत्रिकाङ्कस्य वार्षिकं मूल्यमद्यावधि विभागे बहुभिर्ग्राहकैर्न प्रेषित-मिति निवेद्यन्ते ते वार्षिकमूल्यप्रेषणाय ।

सम्पादकः

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]


प्रधानसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

सह-सम्पादकः

**श्रीमध्वाचार्य आद्यः**, तर्कतीर्थः, मीमांसा-वेदान्ताचार्यः





---


२७ वर्ष

४ अङ्कः

वार्षिकमूल्यम् १० रूप्यकाणि

प्रत्यङ्कमूल्यम् ३ रूप्यकाणि

## वाराणसेयसंस्कृतविश्वविद्यालयस्य विशिष्टं प्रकाशनम्

१. बृहच्छब्देन्दुशेखरः ( व्याकरणम् )
श्रीनागेशभट्टविरचितः ( १–३ भागाः )

२. बृहत्संहिता ( ज्योतिषम् ) ( प्रथमो भागः ) ४५-००
श्रीवराहमिहिराचार्यकृता ( द्वितीयो भागः ) १८-००

३. द्वैतपरिशिष्टम् ( धर्मशास्त्रीयमैथिलनिबन्धरूपम् ) २०-००
श्रीकेशवमिश्रविरचितम् – सं० दुर्गाधर झा ८-००

४. लघुकाशिका ( व्याकरणम् ) ( प्रथमो भागः )
—लेखकः सम्पादकश्च श्रीसुदर्शनाचार्यत्रिपाठी ( द्वितीयो भागः ) १६-२५

५. प्राकृतप्रकाशः ( प्राकृतं व्याकरणम् ) १६-००
श्रीवररुचिविरचितः ( परिवर्द्धितसंस्करणम् )
—सं० आचार्यश्रीबलदेव उपाध्यायः ३७-७५

६. कल्किपुराणम् ( पुराणम् )—सं० अशोकचटर्जीशास्त्री

७. प्राच्यभारतीयम् ऋतुविज्ञानम् ( शोधप्रबन्धः ) १८-००
डॉ० धुनीरामत्रिपाठिविरचितम्

८. पाणिनीयव्याकरणे प्रमाणसमीक्षा ( शोधप्रबन्धः, व्याकरणम् ) १८-००
डॉ० रामप्रसादत्रिपाठिविरचिता

९. धर्मशास्त्रीयव्यवस्थापत्रसंग्रहः ( धर्मशास्त्रम् ) २६-२५
—डॉ० सुभद्रझाद्वारा संपादितः १०-००



# विषयानुक्रमणिका

# सारस्वती सुषमा

वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२७ वर्षः | फाल्गुनपूर्णिमा, सं० २०२९ | ४ अङ्कः

# अविद्याया आश्रयत्वविषयत्वयोर्भामतीकारमतमीमांसा

प० श्रीदेवस्वरूपमिश्रः

वेदान्त विभागाध्यक्षः, वा० सं० वि० वि०

यस्या प्रसादमासाद्य मूढो वाचस्पतीयति।
तां श्रीवाग्देवतां नत्वा किञ्चिद् वक्तुमुपक्रमे॥

तत्र परिमितसङ्ख्याकैर्घटितान्येव पदानि वाक्यानि च, तथापि तेषामर्था न केनापि सर्वतो ज्ञातुं शक्या इति नाविदितं विदुषाम्। भाषा या कापि भवतु, किन्तु तस्यां वर्णास्तु नियता एव सन्ति। पदानि वाक्यानि च तद्घटितान्यपि न नियतसङ्ख्याकानीत्यहो शब्दमाहात्म्यम्। अतः सर्वभाषाज्ञत्वन्तु दूरापास्तम्, एकस्यामपि भाषायां निबद्धानां समेषां ग्रन्थानां निबन्धानां पत्रिकादीनाञ्च ज्ञातृत्वं नास्त्येव कस्यापि। अत एवाक्षराणि ब्रह्मरूपेण मन्यन्ते। "अनेकार्था हि धातवः" इति सिद्धान्तोऽप्येतत्परिपोषकः। उक्तञ्च कविवरैः—

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥ इति।

(उ० रा० च०, १)

तस्यायमेव भावो यद्वर्णाः परिमिताः, किन्तु नार्थः परिमितः पदानि वाक्यानि वा। नात्र संशयलेशोऽपि। अत एव "इन्द्रश्चाध्येता बृहस्पतिश्चाध्यापयिता····नान्तं जगाम" इति महाभाष्यमपि प्रोक्तार्थनिश्चायकमेव। भगवान् वेदव्यासोऽपि ब्रह्मसूत्रे शब्दतः सृष्टिं प्रतिपाद्य प्रपञ्चस्य शब्दस्यापरिमितत्वमेवाविश्चक्रुः। अतो वाक्यार्थादिविषये संशयादयो नानुपपन्ना इति तन्निराकरणाय समाधानादीन्यपि प्रामाण्यमाश्रयन्ते प्रकृतमनुसरामः—

अद्वैतवेदान्ते विद्यते किल प्रस्थानद्वयम्—भामतीप्रस्थानं विवरणप्रस्थानञ्च। संक्षेपशारीरककारस्यापि मतं क्वचन विवरणानुसारेण, क्वचिच्च ततो भिन्नमपि किञ्चिदिति

स्थितिः। तत्रैतेषां सर्वेषामाचार्याणां मते प्रपञ्चस्योपादानकारणमविद्यैवानिर्वचनीयेति मतम्। यतो हि–कस्यापि भावकार्यस्य किमपि निमित्तकारणं किमपि चोपादानकारणं भवति। यथा—घटस्य ( भावकार्यस्य ) निमित्तं दण्डचक्रचीवरकुलालादयः, उपादानञ्च मृत्तिका। तथैव प्रपञ्चरूपस्य कार्यस्य निमित्तकारणं चेतनं ब्रह्म, उपादानकारणञ्चाविद्यैव। इमां प्रक्रियामङ्गीकृत्यैव "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्"[1] इति सूत्रस्य प्रामाण्योपपत्तिः। ब्रह्म तु नित्यशुद्धबुद्धमुक्तस्वरूपमविकारि न कस्याप्युपादानं भवितुमर्हति, विकृतत्वापत्तेः। अपरञ्च—तस्योपादानत्वस्वीकारे कारणानुरूपमेव कार्यमिति दर्शनाज्जगतश्चैतन्यरूपतापत्तेः। इष्टापत्तेरनवसरोऽत्र जडत्वोपलब्धेः। अतो हेतोरविद्यैव भावरूपाऽस्य जगतो भवत्युपादान-कारणम्। अस्या उपादानकारणत्वादेव वेदान्तिभिर्भावरूपत्वं स्वीकृतम्, अभावस्य कमपि प्रत्युपादानत्वानुपलब्धेः। न हि कोऽपि भवत्युपादानमभावस्य, न वा अभावः कमपि प्रत्यु-पादानकारणम्। उपादानकारणं भावपदार्थ एव भवति, भावकार्यं प्रत्येव। अतो भावरूप-प्रपञ्चं प्रति भावरूपैवाविद्या उपादानकारणमिति वेदान्तराद्धान्तः। यथा—अधर्मो नञ्समास-घटितपदप्रतिपाद्योऽपि नाभावरूपः, किन्तु भावपदार्थः, तथैवोपलम्भात्; तथैवाज्ञानमपि नञ्घटितपदप्रतिपाद्यमपि नाभावरूपम्,अतो नूनं तस्योपादानकारणत्वोपपत्तिः। अपरञ्चा-विद्याया भावरूपत्वेऽपरोऽपि हेतुश्चकास्ति। आवरणं कस्यापि भावपदार्थ एव भवति, नाभाव-स्यावरकत्वम्। अतोऽपि भवति भावरूपताज्ञानस्य। अत एव संक्षेपशारीरके—

> नाभावताऽस्य घटते वरणात्मकत्वा-
> न्नाभावमावरणमाहुरभावशौण्डाः।
> अज्ञानमावरणमाह च वासुदेव-
> स्तद्भावरूपमिति तेन वयं प्रतीमः॥
>
> ( सं० शा०, १।३२० )

इति प्रोक्तम्।

गीतायामपि—

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ इति

अतो भावरूपाज्ञानमेवोपादानं जगतः, न ब्रह्म। यत्र क्वचन ब्रह्मण उपादानत्वं प्रति-पादितं तत्तु विवर्तोपादानत्वपरमिति न मतव्याकोपः।

प्रकृते लेखे विवेचनीयमिदं वर्तते यदज्ञानं किमाश्रित्य विद्यमानमुपादानं भवति प्रपञ्चस्य। तत्र सङ्क्षेपशारीरककृता सर्वज्ञात्ममुनिना प्रतिपादितं यत् प्रपञ्चस्योपादानकारण-मविद्या ब्रह्मविषयिणी ब्रह्माश्रिता च सती भवति कारणम्। जीवं सा समाश्रित्य नावस्थातुं शक्नोति, जीवस्याविद्याप्रयुक्तत्वात्, प्रयोजकस्य प्रयोज्याश्रितत्वानुपपत्तेः। तथा चोक्तम्—

> आश्रयत्वविषयत्वभागिनी निर्विकल्पचितिरेव केवला।
> पूर्वसिद्धतमसो हि पश्चिमो नाश्रये भवति नापि गोचरः॥ इति
>
> ( सं० शा० १।३१९ )

---

१. ब्रह्मसूत्रे—१-४-२३।

अत्र विषये श्रीमद्भिर्दर्शनकाननपञ्चाननैर्वाचस्पतिमिश्रैर्जीवाश्रितैवाविद्या प्रपञ्चस्योपादानमिति प्रतिपादितम्। अनादित्वाच्चान्योन्याश्रयदोषाप्रसक्तिः पूर्वापरीभावपराकृतिश्च कृता मन्यते च विद्वद्भिरादरेण मतद्वयमपि। साम्प्रतमिदं विचार्यते यद् यो हेतुः प्रदर्शितो मिश्रैरविद्याया जीवाश्रितत्वे ब्रह्मानाश्रितत्वे च स कथं प्रामाण्यमाश्लिष्यतीति। तत्र मूलशाङ्करभाष्ये परमेश्वराश्रयाऽविद्येति प्रतिपादितम्, किन्तु भामतीकृद्भिर्जीवाश्रितेति प्रतिपादितम्। तथाहि—

"अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या **परमेश्वराश्रया** मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिता शेरते संसारिणो जीवाः" इति शाङ्करभाष्यम्।[1] ततो भामत्याम्—"नन्वेवमविद्यैव जगद्बीजमिति कृतमीश्वरेणेत्यत आह—**परमेश्वराश्रयेति**। न ह्यचेतनं चेतनानधिष्ठितं कार्याय पर्याप्तमिति स्वकार्यं कर्तुं परमेश्वरं निमित्ततया वोपादानतया वाऽश्रयते, प्रपञ्चविभ्रमस्य हीश्वराधिष्ठानत्वमहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम्, तेन यथा—अहिविभ्रमो रज्जूपादानः, एवं प्रपञ्चविभ्रम ईश्वरोपादानः। तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया वेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते, न त्वाधारतया, **विद्यास्वभावे** ब्रह्मणि तदनुपपत्तेः" इति। अत्रैव विचारो विधेयो यद् मिश्रैर्ब्रह्माश्रितत्वे बाधकः प्रोक्तः "विद्यास्वभावे ब्रह्मणि तदनुपत्तेः" इति। अर्थाद् ज्ञानस्वरूपे ब्रह्मणि कथमविद्या तिष्ठेत्? जीवे तु भवितुमर्हति, जीवस्यान्तःकरणावच्छिन्नचैतन्यरूपतया ज्ञानमात्रस्वरूपानुपपत्त्याऽविद्याश्रयत्वोपपत्तेः। किन्तु सूक्ष्मेक्षिकयाऽऽलोचनेनेयमुक्तिः समीचीना भाति। यतो हि **सर्वाधिष्ठानं ब्रह्मे**ति वेदान्तराद्धान्तः। "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्यादिश्रुत्या सर्वप्रपञ्चस्य ज्ञानस्वरूपे ब्रह्मण्येवावस्थानप्रतिपादनात्। **'सेतु'**शब्देनाधारत्वादेव ब्रह्मणः श्रुतौ प्रतिपादनपरं वचनमपि विद्यते। सेतुरिव सेतुर्विधारकः सर्वप्रपञ्चस्येति व्याख्यानमप्याचार्यैः कृतम्। अत एव मूलभाष्ये शङ्कराचार्यैः "परमेश्वराश्रया" इति भाषितम्। सर्वाधिष्ठानं ब्रह्माविद्याया नाधिष्ठानम्, अविद्याकार्याणां तु भवत्याधार इति व्याहतं वचः।

अपरञ्च—कार्यकारणयोरैकाधिकरण्यमावश्यकम्। यदि ब्रह्मण्यविद्या नास्ति, तर्हि अविद्या प्रयोज्या अनादयः पदार्थाः सादयश्चाविद्याजन्या कथं ब्रह्मणीति विचित्रा विडम्बना। वेदान्ते प्रतिपाद्यते यत्सर्वाधिष्ठानत्वादविद्यासाधकत्वाद् ब्रह्मस्वरूपेण नाविद्यानिवर्तकम्, किन्तु निष्कामकर्मोपासनानुष्ठानद्वारकतत्त्वमस्यादिवाक्यजन्याहं ब्रह्मास्मीत्याकारकाखण्डवृत्त्यभिव्यक्तमविद्यानिवर्तकमिति। अद्वैतसिद्धौ चतुर्थपरिच्छेदे, प्रथमपरिच्छेदे लघुचन्द्रिकायाञ्च प्रतिपादितम्। सर्वेषामेषां वेदान्तमान्यमतानामिदानीमप्रामाण्यापत्तिः स्यात्।

वाचस्पतिमिश्रवचोव्याख्यानपटूनां वेदान्तकल्पतरुकृतां तर्कः श्रूयतां श्रीमद्भिः—"अपि च दर्पणाद्युपाधेर्विषय एव मुखं नाश्रयः। न तु निर्विशेषब्रह्मस्वरूपाविद्यासम्बन्धसंभवः इत्यनादिन्यौ जीवाविद्ये परस्पराधीनतयाविद्या तत्सम्बन्धवदुपेये" इति। नायं

---

१. ब्रह्मसूत्रे-१-४-३- तदधीनत्वादर्थवत्।

तर्कः समीचीनः, दृष्टान्तदार्ष्टान्तिकयोरसाम्यात्। परिच्छिन्नं मुखं परिच्छिन्नश्च दर्पणः, तयोराश्रयाश्रयिभावानुपपत्तिरुपपद्यते। अत्र तु सर्वव्यापकं सर्वाधिष्ठानं ब्रह्म कथमविद्याया नाश्रय इति नेयमुक्तिरुपपादयितुं समर्था मिश्रमतम्।

अतोऽत्र काचन युक्तिः प्रबला देया यया नूनमस्य मिश्रवचस उपपत्तिर्भवेत्—"विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः" इत्यस्य। अत्र लघुचन्द्रिकादर्शनसम्प्राप्तसम्यग्दृष्टिकस्य मम यत्प्रतिभाति तदत्र प्रदर्श्यते। तथाहि—अविद्याया आश्रयो द्विविधो भवति—एकोऽध्यासेन अपरश्चाच्छाद्यत्वेन। आध्यासिकसम्बन्धेनाविद्याया आश्रयो ब्रह्म भवत्येव, अन्यस्याभावात्। किन्तु आच्छाद्यतासम्बन्धेन ब्रह्मणि नाविद्या तिष्ठति। अत एव मिश्रैः—"विद्यास्वभावे ब्रह्मणि" इत्युक्तम्। जीवे तु साऽच्छाद्यतासम्बन्धेन वर्तते। अत एवाविद्याया अभानापादकत्वमसत्त्वापादकत्वञ्च वेदान्तशास्त्रे प्रतिपादितमुपपद्येते। नास्ति ब्रह्म न भाति ब्रह्मेत्याकारकयोर्द्वयोर्जीव एव सम्भवासम्भवाच्च ब्रह्मणि नाच्छादिका सेति ब्रह्मानाश्रयेति श्रीवाचस्पतिमिश्रैः प्रतिपादितम्। अद्वैतसिद्धिव्याख्यायां लघुचन्द्रिकाख्यायां श्रीगौडब्रह्मानन्दस्वामिचरणैरपीत्थमेव चर्चितम्—"नह्यविद्याया आच्छादकत्वं वस्त्रादेरिव, येन न्यूनत्वं तद्विरोधि स्यात्, किन्तु नास्तीत्यादिव्यवहारहेतुत्वादीत्युत्तरमविद्याया विभुत्वाद्युक्त्या दत्तमिति भावः[१]। अतोऽत्रेदमेव निश्चेतव्यं यदाच्छाद्यत्वसम्बन्धेनाविद्या ब्रह्मणि न तिष्ठति, आध्यासिकसम्बन्धेन तु तिष्ठत्येवेत्याशयः श्रीवाचस्पतिमिश्राणाम्। अत एवान्यत्रापि भामत्याम्—"एतमेव दहराकाशं प्रक्रम्य बताहो कष्टमिदं वर्तते जन्तूनां तत्त्वावबोधविकलानां यदेभिः स्वाधीनमपि ब्रह्म न प्राप्यते। तद्यथा—चिरन्तननिरूढनिबिडमलपिहितानां कलधौतशकलानां पथि पतितानामुपर्युपरि सञ्चरद्भिरपि पान्थैर्धनायद्भिर्ग्रावखण्डनिवहविभ्रमेणैतानि नोपादीयन्ते" इत्यभिसंधिमती साद्भुतमिव सखेदमिव श्रुतिः प्रवर्तते—"इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति। स्वापकाले हि—"सर्व एवायं विद्वानविद्वांश्च जीवलोको हृत्पुण्डरीकाश्रयं दहराकाशाख्यं ब्रह्मलोकं प्राप्तोऽप्यनाद्यविद्यातमः पटलपिहितदृष्टितया ब्रह्मभूयमापन्नोऽहमस्मीति न वेद। सोऽयं ब्रह्मलोकशब्दस्तद्गतिश्च प्रत्यहं जीवलोकस्य दहराकाशस्यैव ब्रह्मलोकतामाहतुः" इति। अनेनातीवसारगर्भितेन वाक्यकदम्बेन मिश्रचरणैरविद्याया आच्छादकत्वं जीवस्य चाच्छाद्यत्वं स्पष्टमेव प्रकटीकृतम्। अनेन रूपेण भामत्या सम्पूर्णाया आलोडने क्रियमाणे तत्तात्पर्यावधारणे कुतोऽप्रामाण्यगन्धलेशोऽपि प्रसज्येत। येषां मिश्राणां सर्वदर्शनेषु वचांसि तत्तद्दर्शनानुसारेणैव पदार्थप्रतिपादनेन सर्वलोकवन्दितानि परमप्रामाण्यं श्रुतिरिव भजमानानि सन्ति। तत्र क्व प्रामाण्यभ्रंशसंशयः ? भवतु नाम तत्तात्पर्यनिराधारमूलकः संशयः, योऽविचारितरमणीयो विचारे कृते निवर्तते। इति शम्।



---

१. अद्वैतसिद्धौ-अज्ञानवादेऽज्ञानविषयनिरूपणप्रकरणे ५६२ पृष्ठे।

२. ब्रह्मसूत्रे-१-३-१५-गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्चेत्यत्र।

# श्रीमद्भागवतस्य महापुराणत्वमण्डनम्

डॉ० श्रीकृष्णमणित्रिपाठी

पुराणेतिहासविभागाध्यक्षः, वा० सं० वि० वि०

सृष्टेरादिकालतः प्रलयपर्यन्तं समस्तस्य विश्वस्य क्रमबद्धमितिहासमुपस्थापयितुं प्रवृत्तानां वैदिकपरम्परापरिपोषकाणां भारतीयसंस्कृतेः प्रतीकानामष्टादशपुराणानां गणनाक्रमः प्रायः प्रतिपुराणमुपलभ्यते । तथाहि—

ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ।
भविष्यं नारदीयञ्च स्कान्दं लिङ्गं वराहकम् ॥
मार्कण्डेयमथाग्नेयं ब्रह्मवैवर्तमेव च ।
कौर्मं मात्स्यं गारुडञ्च वायवीयमनन्तरम् ॥
अष्टादशसमुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ।

( गरुडपुराणे २१५।१५-१७ )

एवं विभिन्नेषु पुराणेषु महापुराणगणनायामेकस्य भागवतपुराणस्य नाम निर्दिष्टमस्ति ।

सर्वेषां च पुराणानां श्रेष्ठं भागवतं स्मृतम् ।

( ३।३।२८।१५ )

इति भविष्यपुराणोक्त्या भागवतपुराणस्य श्रेष्ठत्वप्रतिपादनात् ।

तत्र श्रद्धालवः कतिपये विपश्चितो भागवतपदेन श्रीमद्भागवतं महापुराणं मन्यन्ते, केचन च देवीभागवतमेव भागवतपदेन व्यपदिशन्ति । यतस्तयोर्द्वयोरपि पुराणयोः श्लोकसंख्या समानैवास्ते, अष्टादशसहस्रम्; स्कन्धा अप्युभयत्र द्वादशैव सन्ति । उभे अपि महापुराणे इति साधयितुं तत्तत्पुराणेषु प्रमाणान्यप्युपलभ्यन्ते । उभयत्रापि प्रत्यध्यायं पुष्पिकासु महापुराणत्वस्योल्लेखो विद्यते ।

अपि च स्वयं देवीभागवतेन "मद्वयं भद्वयम्" ( १।३।२ ) इति पद्ये महापुराणेषु निम्नाङ्कित च पद्ये उपपुराणेषु च भागवतस्योल्लेखः कृतोऽस्ति—

माहेश्वरं भागवतं वसिष्ठं च सविस्तरम् ।
एतान्युपपुराणानि कथितानि महात्मभिः ॥

( देवीभागवते १।३।१६ )

एवं स्थितावनयोः कतरद् महापुराणं मन्तव्यम्, कतरच्चोपपुराणं स्वीकर्तव्यमिति विषमां समस्यां समादाय विदुषां समाजेऽनयोर्महापुराणत्वविषये महान् मतभेदो लक्ष्यते । तत्र तावच्छ्रीमद्भागवतस्य महापुराणत्वसाधकानि प्रमाणानि युक्तयश्चोपस्थाप्यन्ते ।

( क ) पद्मपुराण-स्कन्दपुराणानुसारं यत्रानेकविधं श्रीकृष्णचरितं चर्चितमस्ति, यच्च कृष्णद्वैपायनद्वारा समुद्दिष्टं तद् वैयासकिना शुकेन राज्ञे परीक्षिते श्रावितम्, तत् सर्वेषु पुराणेषु श्रेष्ठतममष्टादशसहस्रश्लोकसंख्याकं द्वादशभिः स्कन्धैर्युतं श्रीमद्भागवतं महापुराणं प्रोच्यते—

पुराणेषु च सर्वेषु श्रीमद्भागवतं परम् ।
यत्र प्रतिपदं कृष्णो गीयते बहुधर्षिभिः ॥
( पद्मपुराणे उ० ख० १९३।३ )

अपि च—

ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः ।
परीक्षिच्छुकसंवादः श्रीमद्भागवताभिधः ॥
( १९५।२९ )

परीक्षिच्छुकसंवादो योऽसौ व्यासेन कीर्तितः ।
ग्रन्थोऽष्टादशसाहस्रो योऽसौ भागवताभिधः ॥
कलिग्राहगृहीतानां स एव परमाश्रयः ।
( स्कन्दपुराणस्य वैष्णवखण्डे ४।६ )

( ख ) किञ्च, नारदीयपुराणे लोकपितामहेन ब्रह्मणा प्रजापतये मरीचये भागवतपुराणस्य लक्षणं ब्रुवता प्रोक्तं यद् महर्षिणा वेदव्यासेन वेदसारांशरूपतया द्वादशस्कन्धेषु अष्टादशसहस्रश्लोकद्वारा कल्पवृक्षवत् सर्वाभीष्टदायकं श्रीमद्भागवतं निर्मितमस्ति । यत्र भगवतो विष्णोर्महिम्नस्तद्भक्तेश्च विशदरूपेण निरूपणं वर्तते । यस्य च श्रवणमात्रेण मानवमात्रं सर्वविधैः पातकैः प्रमुच्यते, तदेवास्ति भागवतं पुराणम्—

मरीचे शृणु वक्ष्यामि वेदव्यासेन यत् कृतम् ।
श्रीमद्भागवतं नाम पुराणं ब्रह्मसंज्ञितम् ॥
तदष्टादशसाहस्रं कीर्तितं पापनाशनम् ॥
सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः ।
भगवानेव विप्रेन्द्र विश्वरूपी समीरितः ॥
( नारदीये ६३।१-३ )

एवं पाद्मे स्कान्दे नारदीये च पुराणे यद् भागवतपुराणलक्षणं कृतमस्ति, तद् विशेषतया श्रीमद्भागवत एव संघटते । अतः श्रीमद्भागवतमेव भवितुमर्हति महापुराणम्, न तु देवीभागवतम् ।

( ग ) अपि च पद्मपुराणस्य भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समुपस्थितानां नामग्राहं गणनाप्रसङ्गे लिखितमस्ति यद् भक्तेस्तनययोर्ज्ञानवैराग्ययोरुज्जीवनाय देवर्षिनारदद्वारा समायोजितश्रीमद्भागवतकथां श्रोतुं मूर्तिमन्तश्चत्वारो वेदाः, वेदान्तम्, मन्त्राः, तन्त्राः, मूर्तिमन्ति सप्तदश पुराणानि षड् दर्शनानि चोपतस्थुः—

वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राः समूर्तयः।
सप्तदश पुराणानि षट् शास्त्राणि समाययुः॥
( पाद्मे १६५।१८ )

( घ ) किञ्च, तत्रैवाग्रे लिखितमस्ति यत् सप्तदशपुराणानां महाभारतस्य च रचनानन्तरमपि यदा सत्यवतीपुत्रो भगवान् व्यासदेवः शान्तिं नाप्तवान्, तदा देवर्षेर्नारदस्योपदेशात् श्रीमद्भागवतं निर्माय आत्माराममलात्मानं स्वतनयं शुकमध्याप्य शाश्वतीं शान्तिं समासादितवान्—

सप्तदश पुराणानि कृत्वा सत्यवतीसुतः।
नाप्तवान् मनसा तोषं भारतेनापि भामिनि॥
चकार संहितामेतां श्रीमद्भागवतीं पराम्।
शुकमध्यापयामास विरतं लोकवेदतः॥
( पद्मपुराणस्योत्तरखण्डे १९८।६५,११५ )

एभिर्वचनैर्निश्चीयते यद् यद्यष्टादशपुराणगणनायां देवीभागवतमभिमतं स्यात्, तर्हि पुराणानामष्टादशत्वादष्टादशसंख्याकथनं समुचितं भवेत्, परन्तु तदनुक्त्वा सप्तदशकथनेनाष्टादशं श्रीमद्भागवतमेव महापुराणं सिध्यति।

( ङ ) अपि च पद्मपुराणानुसारं पुराणेष्वष्टादशसु षट् पुराणानि सात्त्विकानि, षड् राजसानि षट् च तामसानि प्रोक्तानि सन्ति। तत्र सात्त्विकेषु पुराणेषु विष्णुपुराणम्, नारदीयपुराणम्, भागवतपुराणम्, गरुणपुराणम्, पद्मपुराणम्, वाराहपुराणं चेति षट् पुराणानि गणितानि—

वैष्णवं नारदीयञ्च तथा भागवतं शुभम्।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने॥
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै।
( पद्मपुराणे, उ० ख० २३६।२९ )

भविष्यपुराणे च सात्त्विकपुराणेषु कर्तृनिर्देशपूर्वकं विष्णु—स्कन्द-पद्म-भागवत-ब्रह्म-गरुडपुराणानामस्ति निर्देशः—

पराशरेण रचितं पुराणं विष्णुदैवतम्।
शिवेन रचितं स्कान्दं पाद्मं पद्ममुखोद्भवम्॥
शुकप्रोक्तं भागवतं ब्राह्मं वै ब्रह्मणा कृतम्।
गारुडं हरिणा प्रोक्तं षड् वै सात्त्विकसम्भवाः॥
( भविष्यपुराणस्य प्रतिसर्गपर्वणि २८।१०,११ )

अत्र भागवतशब्देन किं पुराणं ग्राह्यम्, श्रीमद्भागवतं देवीभागवतं वेति जिज्ञासायाम् "सात्त्विकेषु पुराणेषु श्रीमद्भागवतं स्मृतम्" इति कूर्मपुराणवचनप्रामाण्याद् भागवतपदेन श्रीमद्भागवतस्यैवास्ति ग्रहणम्, अतस्तदेव महापुराणगौरवमावहति, न तु देवीभागवतम्।

परन्तु मत्स्यपुराणानुसारं यत् पुराणं गायत्रीमवलम्ब्य सारस्वतकल्पवर्तिनां देवानां मानवानां च कथाभिः सन्दब्धं वर्तते, यत्र च वृत्रासुरवधस्योल्लेखः, धर्मस्य विवेचनं विद्यते, तदेवाष्टादशसहस्रश्लोकात्मकं भागवतमुच्यते—

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥
अष्टादशसहस्राणि पुराणं तत् प्रकीर्तितम् ।
( मत्स्यपुराणे ५३।२०-२२ )

एव मत्स्यपुराणप्रोक्तः सारस्वतकल्पस्य प्रसङ्गः श्रीमद्भागवते नास्ति, प्रत्युत तत्र—

परिमाणं च कालस्य कल्पलक्षणविग्रहम् ।
यथा पुरस्ताद् व्याख्यास्ये पाद्मं कल्पमथो शृणु ॥
( श्रीमद्भागवते २।१०।४७ )

इति वचनानुसारं श्रीमद्भागवते पाद्मकल्पस्यैव प्रसङ्गो विस्तरेण वर्णितोऽस्ति, न तु तत्र सारस्वतकल्पीयानां नराणाममराणाञ्चोद्भववृत्तान्तमुपात्तमस्ति । अतः श्रीमद्भागवतं सारस्वतकल्पीयं भवितुं नार्हति । तस्मात् तत्र सारस्वतकल्पवर्तिनां नरामराणां कथाभिः सन्दब्धत्वाद् देवीभागवतमेव महापुराणयोग्यतां बिभर्ति ।

( ख ) अपि च शिवपुराणस्योमासंहितायां स्पष्टमुल्लेखो विद्यते यद् यस्मिन् पुराणे भगवत्या दुर्गायाश्चारुचरित्रं चर्चितमस्ति, तदेवास्ति भागवतं पुराणम्, नहि कालिकापुराणं भागवतं स्वीकर्तव्यम् ।

भगवत्याश्च दुर्गायाश्चरितं यत्र वर्ण्यते ।
तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम् ॥
( शिवपुराणे उ० सं० ४४।१२६ )

कालिकापुराणस्य हेमाद्रिप्रस्तावे "यदिदं कालिकाख्यं तन्मूलं भागवतं स्मृतम्" इति वचनानुसारं कालिकोपपुराणस्य मूलं देवीभागवतमस्ति । एतच्च वचनं देवीभागवतस्य महापुराणत्व एव संघटते, यतो हि तत एवैतन्निःसृतम् । यतो यन्निःसरति तदेव भवति तस्य मूलम्—

अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदृश्यते ।
विजानीध्वं द्विजश्रेष्ठास्तथा तेभ्यो विनिर्गतम् ॥
( मत्स्यपुराणे ५३।६३ )

इति वचनप्रामाण्यात् । अष्टादशभ्यो महापुराणेभ्य एवाष्टादशोपपुराणानि निर्गतानि सन्ति । एतत्सिद्धान्तानुसारं कालिकोपपुराणं कस्माद् महापुराणाद् निःसृतमिति जिज्ञासायाः

पूर्तिमेव विधत्ते एष मात्स्यः श्लोकः। यथा शिवपुराणादिभ्यः शैवोपपुराणानि निर्गतानि, विष्णुपुराणादिभ्यो वैष्णवोपपुराणानि निःसृतानि, तथैव कालिकोपपुराणमपि देवीभागवतादेव निर्गतमस्ति। तथा च कालिकोपपुराणस्य देवीभागवतमूलकत्वाद् देवीभागवतमस्ति महापुराणम्, न तूपपुराणकोटावाटीकितुमर्हति तत्।

(ग) किञ्च, रक्तासुरस्य वधप्रसङ्गे प्रोक्तात्—

या जघ्ने माहिषं दैत्यं क्रूरं वृत्रासुरं तथा।
साद्य रक्तासुरं हत्वा स्वाराज्यं ते प्रदास्यति॥

इत्यादित्यपुराणवचनाद् देवीभागवतमेव महापुराणं सिध्यति। यतो हि देवीभागवतातिरिक्ते कस्मिन्नन्यस्मिन् पुराणे एवंविधं विशदं देवीकृतं महिषासुर-वृत्रासुर-रक्तासुराणां वधस्य वर्णनं नोपलभ्यते!

(घ) ददाति सूर्यभक्ताय यस्तु भागवतं द्विजः।
सर्वपापविनिर्मुक्तः सर्वव्याधिविवर्जितः॥
जीवेद् वर्षशतं साग्रमन्ते वैवश्वतं पदम्।

एतद् वचनमपि देवीभागवतस्यैव पक्षे उपपद्यते, न श्रीमद्भागवतपक्षे; यतो देवीभागवतस्य प्रथमे पद्ये त्रिपदाया गायत्र्याः स्पष्टतया उल्लेखो विद्यते। एकादशे स्कन्धे च विस्तरतो गायत्रीविधानेन सह सहस्रनाम्नोऽपि कथनमस्ति। गायत्र्या देवतास्ति भगवान् सूर्यः। अतोऽत्र शतवर्षजीवनानन्तरं सूर्यलोकगमनस्य विद्यते सङ्केतः। यद्यत्र श्रीमद्भागवतमभिप्रेतं स्यात्, तदा विष्णुलोकवैकुण्ठगमनस्यैव चर्चा कृता भवेत्।

(ङ) चित्सुखाचार्यस्य भागवतकथासङ्ग्रहे लिखितमस्ति यद् यत् पुराणमष्टादशसहस्रश्लोकैर्द्वादशभिश्च स्कन्धैः पूर्णमस्ति, यत्र हयग्रीवद्वारा ब्रह्मविद्यालाभकथा वर्णिता विद्यते, वृत्रासुरस्य च वधो वर्णितोऽस्ति, यत्र च गायत्र्या आरम्भो भवति, तदेव पुराणं भागवतपुराणमिति नाम्ना व्यपदेष्टुं शक्यते—

ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः।
हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा॥
गायत्र्या च समारम्भस्तद्वै भागवतं विदुः।

एवमेषां प्रमाणानामाधारेण देवीभागवतमेव महापुराणं सिध्यति। यतो हि तत्र प्रारम्भे एव त्रिपदाया गायत्र्या निर्देशो दृष्टिगोचरतामायाति—

सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि।
बुद्धिं या नः प्रचोदयात्॥
(देवीभागवते १।१।१)

अत्र पद्ये गायत्र्याः 'धीमहि, प्रचोदयात्' इति पदद्वयं साक्षादुपात्तमस्ति। अत्र बुद्धिपदेन गायत्रीस्थं धीपदं सङ्केतितं वर्तते, किन्तु श्रीमद्भागवते 'सत्यं परं धीमहि' इत्यत्र केवलं 'धीमहि' इत्यंशमात्रमुपात्तमस्ति। उभयत्र वृत्रासुरवधकथाया विद्यमानत्वेऽपि

श्रीमद्भागवते हयग्रीवस्य नाममात्रं निर्दिष्टमस्ति, तत्र हयग्रीवद्वारा ब्रह्मविद्यालाभकथा तु नोपलभ्यते, परं देवीभागवते हयग्रीवदैत्यद्वारा ब्रह्मविद्यारूपिण्या महामायाया तपस्या तथा हयग्रीवरूपधारिणो भगवतः शिवस्य माहात्म्यं विशेषरूपेण वर्णितमस्ति।

( च ) अपि च श्रीमद्भागवते मत्स्यपुराणप्रोक्तः सारस्वतकल्पप्रसङ्गोऽपि नास्ति, किन्तु तत्र पाद्मकल्पस्यैव कथा वर्णिता दृष्टिगोचरीभवति।

सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य च।

इति स्कन्दपुराणनागरखण्डीयवचनानुसारं फाल्गुनशुक्लद्वादश्यां तिथौ सारस्वत-कल्पस्याविर्भावो जातः। निम्नाङ्कितशिवपुराणवचनबलेन फाल्गुनशुक्लद्वादश्यामेव मधुकैटभस्य वधाय ब्रह्मणा संस्तुतायाः सकलविद्याधिष्ठात्र्या जगद्धात्र्या भगवत्या महामायाया अपि प्रादुर्भावोऽभवत्—

ब्रह्मणा संस्तुता सेयं मधुकैटभनाशने।
ब्रह्मविद्या जगद्धात्री सर्वविद्याधिदेवता॥
द्वादश्यां फाल्गुनस्यैव शुक्लायां समभून्नृप।
महाकालीति विख्याता शक्तिस्त्रैलोक्यमोहिनी॥
( शि० पु०, ४५।६६,६७ )

तस्मादेषां विविधानां प्रमाणानामाधारेण देवीभागवतमेव सारस्वतकल्पाश्रितं पुराणं प्रवक्तुं शक्यते। अतो देवीभागवतमेव महापुराणगणनायां गणयितुं शक्यते, न श्रीमद्भागवतम्।

एवमेभिर्विभिन्नैः प्रमाणैर्विद्वत्समाजे मतद्वयं प्रचलति। तत्र नारदीयपुराण-शिव-पुराण-पद्मपुराण-स्कन्दपुराणानुसारं श्रीमद्भागवतं महापुराणं सिध्यति, तथा मत्स्यपुराणादि-मतेन देवीभागवतमेव महापुराणं भवितुमर्हति।

## समीक्षा

यद्यपि मत्स्यपुराणादौ निर्दिष्टभागवतलक्षणानुसारं देवीभागवतस्य महापुराणत्वे तिस्रो विशेषताः प्रतीयन्ते—( १ ) गायत्र्या समारम्भः, ( २ ) वृत्रासुरवधप्रसङ्गः, ( ३ ) हयग्रीवब्रह्मविद्याविवरणम्, तथापि सूक्ष्मेक्षिकया विचारे क्रियमाणे आसां तिसृणा-मपि विशेषतानां पर्यवसानं श्रीमद्भागवतस्य महापुराणत्व एव भवति। तथाहि—

( १ ) जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्महृदा य आदिकवये मुह्यन्ति यत् सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥
( श्रीमद्भागवते १।१।१ )

श्लोकेऽस्मिन् गायत्र्या धीमहीति पदं स्वरूपत एवोपात्तमस्ति। गायत्र्यामुपात्तस्य सवितुरित्यस्यार्थबोधः श्लोके 'जन्माद्यस्य यतः' इत्यंशेन निष्पद्यते। वरेण्य-भर्गयोस्तात्पर्यं धाम्ना स्वेन सदा निरस्तकुहकमिति भागेन सिध्यति। गायत्र्यां देवस्येति पदस्य प्रतिनिधिः, स्वराडिति शब्दोऽस्ति, धियो यो नः प्रचोदयादित्यस्य निर्गलितमर्थम् 'तेने ब्रह्म हृदा य आदिकवये' इत्यंशः पूरयति। एवमनेन श्रीमद्भागवतीयमाङ्गलिकपद्येनैव स्वरूपतोऽर्थतश्च गायत्र्यर्थौ हि सम्यगवभासते।

(२) अपि च कस्यापि ग्रन्थस्य तात्पर्यनिर्णये उपक्रमोपसंहारौ भवतो नियामकौ। अनया दृष्टया विचारे प्रस्तुते सति श्रीमद्भागवते "सत्यं परं धीमहि" (१।१।१) इत्यनेनोपक्रमो जातः, अन्ते च "सत्यं परं धीमहि" (१२।१३।१९) इत्यनेनोपसंहारो दृश्यते। अतो मत्स्यपुराणे "यत्राधिकृत्य गायत्रीम्" इत्यस्य, वामनपुराणे च "गायत्र्या च समारम्भः" इत्यस्य च लक्ष्यं श्रीमद्भागवतमेवास्ति, न तु देवीभागवतम्।

(३) पूर्वोक्तभागवतलक्षणे यो हि हयग्रीवब्रह्मविद्यानिर्देशो दृश्यते, स श्रीमद्भागवते षष्ठ-स्कन्धस्याष्टमेऽध्याये निर्दिष्टस्य नारायणकवचस्यास्ति नामान्तरम्। श्रीमद्भागवते कवच-स्यास्योपदेशो वृत्रासुरवधावसरे प्रदत्तो वर्तते। उभयत्र श्रीमद्भागवत-देवीभागवतयोर्वृत्रा-सुरवधकथा कथितास्ति, परमुभयत्र विद्यते किञ्चिद् वैषम्यम्। यत्र देवीभागवतानुसारं वृत्रः पराशक्तिशक्तिमता फेनेन निहितः, तत्र श्रीमद्भागवते नारायणकवचस्योपदेशं प्रदाय शक्ति-सम्पन्नेनेन्द्रेण वृत्रासुरवधो विहितः। उभयत्र वृत्रवधप्रसङ्गस्य विद्यमानत्वेऽपि देवीभाग-वतापेक्षया श्रीमद्भागवते प्रसङ्गोऽयं विस्तरेण निर्दिष्टो वर्तते।

(४) सात्त्विकपुराणनिर्णयप्रसङ्गे मत्स्यपुराणस्य मन्तव्यमस्ति यद् येषु पुराणेषु भगवतो विष्णोर्महिमा प्रचुरतया चर्चितोऽस्ति, तानि सन्ति सात्त्विकानि पुराणानि; येषु ब्रह्मणो माहात्म्यमधिकं वर्ण्यते, तानि सन्ति राजसानि पुराणानि; यत्र अग्नेः शिवस्य च महिमा वर्ण्यते, तानि तामसानि पुराणानि; येषु च सरस्वत्याः पितॄणां च वर्णनमाधिक्येन जात-मस्ति, तानि सन्ति सङ्कीर्णानि पुराणानि—

सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेः।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च।
सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते॥

(मत्स्यपुराणे ५३।६७-६८)

एतद्वचनानुसारं श्रीमद्भागवतमेव सात्त्विकेषु पुराणेषु गण्यते, यतस्तत्र विविधा-वतारप्रसङ्गे भगवतो विष्णोरेव यशो विशेषतया गीतमस्ति। देवीभागवते तु मुख्यतया भगवत्या जगद्धात्र्या एव महिम्नो विशिष्टं वर्णनं विद्यते। अतो न तत् सात्त्विकेषु पुराणेषु गणनीयतामर्हति।

(५) अपि च गारुडे सात्त्विकानि पुराणानि त्रिधा विभक्तानि—उत्तमं सात्त्विकम्, मध्यमं सात्त्विकम्, अधमं सात्त्विकं च। तत्रोत्तमे सात्त्विके विष्णुपुराण-भागवतपुराण-गरुडपुराणानां गणनास्ति। मध्यमे सात्त्विके वायुपुराणं स्वीक्रियते, अधमे सात्त्विके च मत्स्य-पुराण-कूर्मपुराणयोर्ग्रहणमस्ति—

सत्त्वाधमे मात्स्य-कूर्मे समाहु-
वायुं चाहुः सात्त्विकं मध्यमं च।
विष्णोः पुराणं भागवतं पुराणं
सत्त्वोत्तमे गारुडं चाहुरार्याः॥
(२१५।३५)

एवञ्च भागवतस्य सात्त्विकोत्तमोक्त्या सात्त्विकभगवद्विष्णुयशोगानमूर्धन्यतया च श्रीमद्भागवतमेव महापुराणं निर्णेतुं शक्यम्।

(६) पद्मपुराणस्योत्तरखण्डे षट्सु (१९३-१९८) अध्यायेष्वथ च स्कन्दपुराणस्य वैष्णवखण्डे भागवतश्रोतृवक्तृलक्षणश्रवणविधिनिरूपणप्रसङ्गे चतुर्षु (१-४) अध्यायेषु यद्भागवतमाहात्म्यमुपवर्णितमस्ति, तत्र स्थले स्थले स्पष्टं श्रीमद्भागवतस्य नामग्राहं स्मरणं विद्यते। तद् दिङ्मात्रमुदाह्रियते—

श्रीमद्भागवतं तत्र गरीयो भुवि सम्मतम्।
श्रीमद्भागवती वार्ता देवानामपि दुर्लभा॥
(पद्मपुराणे १९३।१६)

कृष्णप्राप्तिकरं शश्वत् प्रेमानन्दफलप्रदम्।
श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम्॥
(स्कन्दपुराणे ४।४८)

(७) नारदीयपुराणस्य पूर्वभागे षण्णवतितमे (९६) अध्याये भागवतस्य यो वर्ण्य-विषयो निर्दिष्टो वर्तते, स श्रीमद्भागवत एव घटते, न तु देवीभागवते।

(८) मध्यकालीनैः स्मृतिनिबन्धकारैः स्वस्वनिबन्धेषु प्रामाण्याय श्रीमद्भागवतस्यैव श्लोकाः समुद्धृताः सन्ति, न देवीभागवतस्य।

(९) अरबयात्री अल्बेरुणिर्गजनीस्थेन महमूदेन साकं भारतभ्रमणव्याजेनात्रागत्य बहु-तिथं कालमुषित्वा अत्रत्यानां विपश्चितां साहाय्येन भारतवर्षविषये, विशेषतो ज्यौतिषे दर्शनशास्त्रे च बहु परिश्रम्य महद् ज्ञानमुपार्ज्य भारतभ्रमणविषयकं पुस्तकमेकं निर्ममे। तत्र तेन पुराणानांयत् सूचीद्वयं प्रस्तुतम्, तत्र श्रीमद्भागवतमेव पुराणेष्वन्यतमं पुराणमङ्गी-कृतमस्ति। अतस्तदानीं श्रीमद्भागवतस्यातिप्रसिद्ध्या तदेव महापुराणगणना कोटिं समारोढुं शक्नोति, न देवीभागवतम्। यदि तदा देवीभागवतमपि पुराणगणनाकोटौ प्रविष्टमभविष्यत्, तदा तेन तस्यापि नाम सङ्केतितमभविष्यत्।

(१०) वङ्गशासकस्य जयदेव-गोवर्द्धनाचार्यादिमहाकवीनामाश्रयदातुर्लक्ष्मणसंवत्संस्थापकस्य सेनवंशावतंसस्य राज्ञो लक्ष्मणसेनस्य पित्रा बल्लालसेनेन पञ्च सागरग्रन्थाः प्रणीताः— ( १ ) दानसागरः, ( २ ) अद्भुतसागरः, ( ३ ) प्रतिष्ठासागरः, ( ४ ) आचारसागरः, ( ५ ) व्रतसागरः। तत्र दानसागरस्योपक्रमणिकायां तेन पुराणस्वरूपविवेचनप्रसङ्गे स्वकीयायाः प्रतिभायाः परिचयो दत्तोऽस्ति। ११६९ ईशवीये वर्षे निर्मिते दानसागरे प्रामाण्याय येषां ग्रन्थानां श्लोकाः समुद्धृताः, तत्र पुराणस्य धर्मशास्त्रस्य च प्राधान्यं वर्तते। बल्लालसेनेन येषां पुराणानां वचनान्युद्धृतानि सन्ति, तेषां तथ्यातथ्यसम्बन्धे स्वीया अमूल्या आलोचनापि प्रस्तुतास्ति। कियतां पुराणानां प्रमाणानुद्धरणस्य कारणं निर्दिशता तेन दानसागरे उट्टङ्कितमस्ति यन्मया त्रयाणां भागवत-ब्रह्माण्ड-नारदीयपुराणानां श्लोका अस्मात् कारणाद् नोद्धृताः, यतस्तानि त्रीण्यपि पुराणानि दानविधिशून्यानि सन्ति—

भागवतं च पुराणं ब्रह्माण्डं चैव नारदीयं च।
दानविधिशून्यमेतत् त्रयमिह न विवद्धमवधार्य॥

( उपोद्घाते ५७ )

वचनस्यास्यानुशीलनेन स्पष्टं सिध्यति यत् श्रीमद्भागवतमेवास्ति महापुराणम्, न देवीभागवतम्। यतो हि श्रीमद्भागवते क्वापि दानविधेरुल्लेखो नास्ति, प्रत्युत देवीभागवते नवमस्कन्धस्य त्रिंशदध्याये दानस्य महती प्रशंसा, दानविषयस्य च साङ्गोपाङ्गं विवेचनं कृतं विद्यते। वल्लालसेनस्य दृष्टौ भागवतपदेन यदि देवीभागवतमभीष्टं स्यात्, तर्हि तेन दानविषयकस्यैकस्याध्यायस्य तत्र विद्यमानत्वेन भागवतं दानविधिशून्यं कथङ्कारं कथयितुं शक्येत। तस्मात् तद्दृष्टौ दानविधिशून्यत्वात् श्रीमद्भागवतमेव दानसागरेऽभिप्रेतमस्ति, तदेव च महापुराणं मन्तव्यम्। अत एतावता प्रपञ्चेन निश्चप्रचं श्रीमद्भागवतस्यैव महापुराणता निर्णीता, न तु देवीभागवतस्य, तत्तूपपुराणेष्वेव गणयित्वा ततोऽभीष्टं साधनीयम्।

( ११ ) अपि च नीलकण्ठकृतगरुडपुराणतत्त्वरहस्यस्य द्वितीयेंऽशे धर्मकाण्डे दुर्गामाहात्म्यसूचकं भागवतमुपपुराणेषु स्पष्टं नामतो निर्दिष्टमस्ति—

पुराणं भागवतं दौर्गं नन्दिप्रोक्तं तथैव च।

एवं रामाश्रमस्य दुर्जनमुखचपेटिकायां शिवपुराणस्य दुर्गाभागवतस्य ( देवीभागवतस्य ) भविष्योत्तरपुराणस्य च नाम उपपुराणेषु गृहीतं वर्तते।

( १२ ) एवं यतिवर्य-श्रीमधुसूदनसरस्वतीस्वामिपादानां सर्वशास्त्रार्थसङ्ग्रहे, नागेशभट्टस्य दुर्जनमुखपद्मपादुकायाम्, पुरुषोत्तमस्य भागवतविषयशङ्कानिरासे च स्पष्टतया देवीभागवतमुपपुराणेषु गणितमस्ति, श्रीमद्भागवतं च महापुराणं स्वीकृतमस्ति। तथा चोपपुराणगणनायां शिवपुराणस्य, आदिपुराणस्य, देवीभागवतस्य च स्पष्टं नाम निर्दिष्टमस्ति—

शैवमादिपुराणं च देवीभागवतं तथा।

( १३ ) अत एव श्रीमद्भागवतस्य प्रसिद्धटीकाकारैः श्रीधरस्वामिपादैरारम्भ एव लिखितमस्ति यद् भागवतनाम्ना प्रसिद्धं पुराणान्तरमपि वर्तत इत्याशङ्कापि न कर्तव्या "भागवतनामान्यदित्यपि नाशङ्कनीयम्" ( १।१।१ )।

स्वामिपादैः टीकाया उपक्रमे लिखितमस्ति यत् श्रीमद्भागवते द्वात्रिंशत्त्रिशतमध्यायाः सन्ति। प० काशीनाथेनापि स्वदुर्जनमुखमहाचपेटिकायां पुराणार्थवाद एतदभिप्रायक एकः श्लोक उद्धृतोऽस्ति यत्र कृष्णद्वैपायनद्वारा प्रदर्शिता द्वादशस्कन्धा द्वात्रिंशत्त्रिशतं चाध्यायाः स्वीकृताः सन्ति—

स्कन्धा द्वादश एवात्र कृष्णेन विहिताः शुभाः।
द्वात्रिंशत्त्रिशतं पूर्णमध्यायाः परिकीर्तिताः॥

पद्मपुराणस्योत्तरखण्डेऽपि—

श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्तथालवालोदयः।
द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं
पर्णान्यष्टदशेष्टदोऽतिसुलभे वरिवर्ति सर्वोपरि॥
( १९८।५१ )

अत्र द्वात्रिंशत्त्रिशतमित्यस्य द्वात्रिंशदधिकशतत्रयम् ( ३३२ ) इत्यर्थो नाभिप्रेतः, प्रत्युत द्वाभ्यामधिका त्रिंशद् द्वात्रिंशत्, शतं च शतं च शतं च शतानि, द्वात्रिंशच्च त्रयश्च शतानि च, तेषां समाहारो द्वात्रिंशत्त्रिशतम्। तत्र द्वात्रिंशदित्यत्र "शाकपार्थिवादीनां सिद्धये मध्यमपदलोपस्योपसंख्यानम्" इति वार्त्तिकबलाद् मध्यमपदलोपी तत्पुरुषसमासः। ततः शतमित्यस्यैकशेषात् शतानीति। तदनन्तरं द्वात्रिंशच्च त्रयश्च शतानि चेति विग्रहे समाहारद्वन्द्वे "बहुप्रकृतिरेव द्वन्द्व एकवत्" इत्यनुशासनादेकत्वं क्लीबत्वञ्च। एवं द्वात्रिंशत्त्रिशतमित्यस्य पञ्चत्रिंशदधिकशतत्रयसंख्याकाः ( ३३५ ) अध्याया इति वास्तविकोऽर्थो निष्पद्यते। तथा च श्रीमद्भागवते पञ्चत्रिंशदुत्तरत्रिशतमध्यायाः ( ३३५ ) बोध्याः। देवीभागवते चाष्टादशोत्तरशतत्रयमेवाध्यायाः ( ३१८ ) उल्लिखिताः सन्ति।

स्कन्धा द्वादश चैवात्र कृष्णेन विहिताः शुभाः।
त्रिशतं पूर्णमध्याया अष्टादशयुताः स्मृताः॥
( १।२।१२ )

( १४ ) श्रीमद्भागवते प्रथमस्कन्धस्य चतुर्थपञ्चमयोरध्याययोः तदीयरचनानिमित्तमभिलक्ष्य लिखितमस्ति यत् चतुर्वेद-सप्तदशपुराण-महाभारतप्रणयनानन्तरमपि यदा महर्षेर्व्यासस्य मनसि शान्तिर्नाविर्भूता, तदा तेन देवर्षेर्नारदस्योपदेशाद् मुख्यतया वासुदेवमहिमप्रकाशकं भक्तिरसप्रधानं पुराणमूर्धन्यमष्टादशं श्रीमद्भागवतं महापुराणं निर्माय शाश्वती शान्तिरधिगता।

अतः सप्तदशपुराणानां निर्माणानन्तरमष्टादशमस्य श्रीमद्भागवतस्य निर्माणादिदमेवास्ति महापुराणम्, न तु देवीभागवतमित्यत्राधिकं रहस्यं तथ्यातथ्यानुशीलनशीलैर्मनोज्ञमानसमरालैर्मनीषिभिरेव समूहनीयम्।

# हिन्दीभाषाया उत्पत्तिविकासौ

श्रीकमलापतिमिश्रः

निदेशकः–संस्कृतविभागः, आकाशवाणी, लखनऊ

हिन्द्या उत्पतिविकासविषये प्रचुरं लिखितम्, परन्तु तत्र स्वतन्त्रचिन्तनस्य चिह्नानि प्रायो नो दृष्टिगोचरं यान्ति। यूरोपीयैर्विशेषत आङ्ग्लैर्विद्वद्भिर्लिखितान् विचारान् भारतीयवेषेण वेषयित्वा अस्मद्देशिका विद्वांसो जगतः पुर उपस्थापयाञ्चक्रुः। तदनुयायिभिः कतिपयैर्विद्वद्भिरेते विचारकलापा न केवलं भ्रान्ता उक्ताः, अपित्वेतत्सिद्धं मतं प्रमाणितं चेति वक्तुं समारब्धम्। सम्प्रत्येतस्मिन् विषये स्वतन्त्ररूपेण किञ्चिल्लिख्यते। प्राज्ञाः पाठकाः पूर्वाग्रहं विहायैतच्चिन्तयितुमनुरुन्ध्यन्ते।

चन्दवरदायिकृतः पृथ्वीराजरासो हिन्दीभाषाया आदिमो ग्रन्थो मन्यते। अत एव मया स एवावलम्ब्यते। रासो ग्रन्थश्चन्द्रकृतोऽस्ति, अथवा तत्पुत्रजल्हकृत इत्यत्र त्रिंशच्चत्वारिंशद् वा वर्षाणि पूर्वं किञ्चिल्लिखितमासीत्। परन्तु कोऽपि निर्णयो न जातः। काव्यमिदं येन केनाऽपि वा विहितं स्यात्, हिन्द्या आरम्भोऽस्मादेव स्वीक्रियते, नात्र संशयः। अनेन मदीयकार्ये साहाय्यं प्राप्यते न वेति द्रष्टव्यमस्ति। यदत्रास्ति तत्तस्यारम्भश्लोकेन स्पष्टीभवति—

उक्तिर्धर्मविशालस्य राजनीतिर्नवरसम्।
षड्भाषा पुराणं च कुरानं कथितं मया॥

अस्यार्थः—अस्मिन् काव्ये मया विशालो धर्मः, राजनीतिः, नवरसाः, षड्भाषाः, पुराणं कुरानं च प्रोक्तानि। भाषाविषय एवास्माभिर्विचार्यमाणोऽस्ति, अतोऽन्यत्सर्वमुपेक्ष्य का नाम षड्भाषा इति द्रष्टव्यम्। षड्भाषाचन्द्रिकायां लक्ष्मीधरेणालेखि—

षड्विधा सा प्राकृती च शौरसेनी च मागधी।
पैशाची चूलिका पैशाच्यपभ्रंश इति क्रमात्॥२६॥

अस्यार्थः—प्राकृतभाषा प्राकृती, शौरसेनी, मागधी, पैशाची, चूलिका पैशाची, अपभ्रंशश्चेति क्रमेण षड्विधा वर्तते। पुनरुच्यते यत्प्राकृतं महाराष्ट्री भाषाऽस्ति। परन्तु रुद्रटेन काव्यालंकार उक्तम्—

प्राकृतम्, संस्कृतम्, मागधी, पिशाचभाषा च, सूरसेनी च षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः।

प्राकृतम्, संस्कृतम्, मागधी, पैशाची, शौरसेनीति पंच, षष्ठी अपभ्रंशभाषा देशभेदाद् बहुधा भिन्नाऽस्ति।

लक्ष्मीधरविरचिता षड्भाषाचन्द्रिका संस्कृतसूत्रनिबद्धापि प्राकृतषड्भाषाचन्द्रिकाऽस्ति। एता एव षड्भाषा रासोग्रन्थाभिमताः सन्तीति वयं मन्यामहे। एतदप्यवश्यं मन्तव्यं यद् लक्ष्मीधरसमये चूलिकापैशाच्यपि प्रचुरप्रचारमासाद्य षड्भाषासु पदमलभत। रुद्रटस्तु संस्कृतस्य काव्यालङ्कारमलिखत्तेन संस्कृतस्यापि षड्भाषासु गणना तत्कृते आवश्यिकाऽभूत्। श्याम-थाईलैण्डभाषासु चूलिका-पैशाची-प्रभावोऽस्य देशस्य पंचनदीयभाषायां च विशेषेण दृश्यते।

अत्रायं निष्कर्षो यदस्माकं हिन्दीभाषाया मूलं षड्भाषायां निहितम्। षड्भाषाभ्यो विनिर्गता हिन्दी समस्ते भारते प्रसारमलभत।

परन्तु नैतद्विस्मर्तव्यं यदियं हिन्दीभाषानेकवैदेशिकभाषाभिः प्रभाविताऽस्ति। एताश्च वैदेशिकभाषा न केवलं अरबी-फारसी-तुर्कीप्रभृतयः, इतोऽप्यन्याः पोर्चुगीजाङ्गलप्रमुखा यूरोपीया भाषा अपि सन्ति। एकस्मिन् समये फारसस्यैरानस्य च साम्राज्यं मध्यैशियायामेव ना पितु यूरोपस्य ईजियनसागरान्तं यावद् विस्तृतमासीत्। गजनीस्थो महमूदः तुरुष्क आसीत्, तथापि तत्प्रशस्तौ लिखितः 'शाहनामा, पारसीक( फारस )भाषायामासीत्, न तु तुरुष्कभाषायाम्। एतेनानुमीयते यत् फारसीभाषा न केवलं फारसस्य, एशियायूरोपयोर्विशालभागस्य भाषा भूत्वा सिन्धुदेशं यावत् प्रचलिताऽसीत्। चन्दबरदायी लवपुर( लाहौर )-वास्तव्य आसीत्। वर्षद्वयं पाञ्चाल( पंजाब )शासनानन्तरं यवना दिल्ल्याः शासका बभूवुः। अत एव रासोकाव्ये अरबी-फारसी-तुरुष्कभाषाशब्दाः प्राचुर्येण प्राप्यन्ते। अरबैर्यद्यपि ईरानदेशोऽष्टशततमेशवीयाब्दसन्निधावाक्रान्तः, तथापि तस्य भाषाधर्मावक्षतावास्ताम्। ईरानवास्तव्यान् आर्यान् अनार्यान् विधाय जगति सामीधर्मं ग्राहिताः। फारसीभाषाद्वारेण तुरुष्कारबभाषाशब्दाः मदीयभाषायामित्थं प्रविष्टा येन तेषां परिचयोऽपि दुष्करोऽभूत्। नासारन्ध्रयोः सन्धिं छित्त्वा तस्मिन् धार्यमाणा बाली 'बुलाक' नाम्ना प्रसिद्धा वर्तते। स च बुलाकशब्दः तुरुष्कभाषाशब्दो विद्यते। सा प्रायेण बालिकाभिः स्त्रीभिश्च धार्यते। बुलाकं धारयतां बालकानां नामानि 'बुलाकी' इति, तद्धारयन्तीनां बालिकानां नामानि बुलकन इति क्रियन्ते। अरबैः स्वोत्कर्षारम्भकाल ईरानमाक्रम्याग्निपूजकाः पारसीकाः प्रसह्य यवनाः कृताः। तेषां लिपिमप्यरबीं विधाय भाषारूपं परिवर्तितम्। अस्मद्देशेऽङ्गुलीनां कनिष्ठा, अनामिका, मध्यमा, तर्जनी, अंगुष्ठश्चेति पृथक् पृथक् पंच नामानि सन्ति। तानि फारस्यामपि सम्भाव्यन्ते। किन्तु सम्प्रति पञ्चानामेव कृते फारस्यां 'अंगुश्त' इति मात्रं नामावशिष्टम्

अरबीविज्ञानभाषाऽस्ति। तेन यत्र यवनानां राज्यं तत्र अरबी प्रविष्टा। अस्माकं देशे यवनशासकानां भाषा अरबी नासीत्, किन्तु फारसी आसीत्। सा च अरबीभाषयाक्रान्ता बभूव। अतो राज्यस्य सर्वेषु विभागेषु फारसीसहकारेणारबीभाषाप्रचारः प्रसारश्चाभूत्। किमाश्चर्यं यदस्माकीनासु हिन्दीप्रभृतिभारतीयभाषास्वरबी सुदृढं कृतास्पदाऽभूत्। एवं षड्भाषया सहारबी-फारसी-तुरुष्कभाषा अपि हिन्दीभाषां प्रविष्टा अभूवन्।

योरोपीयभाषाणां मध्ये प्रथमं पोर्चुगीजभाषा भारते पदं न्यधात्। पुर्तगालराज्यं प्राङ्मुम्बापुर्यामासीत्, पश्चाद् इङ्गलैण्डनृपस्याष्टमस्य हेनरीनाम्नो विवाहोत्सवे पुर्तगालेन मुम्बापुरद्वीपं इङ्गलैण्डाय यौतुकं प्रददौ। गोमान्तके ( गोवा ), दमने, दीवे चाधुनावधि पुर्तगालशासनमासीत्। सम्प्रति दैशिकभाषासु तथा प्रविष्टाः पोर्चुगीजशब्दा यथा ते विश्वविद्यालयस्थैर्हिन्दीप्राध्यापकैरपि न परिचीयन्ते। यथाहि—बोतल-बाल्टी-पीपा-पावरोटी-तौलिया-फालतू-अचार-पगारप्रमुखाः शतं शब्दा हिन्दीं प्रविष्टाः। पुर्तगालशासनाभावेऽप्यस्माकं भाषासु तस्य सुस्थिराणि चिह्नानि चञ्चन्ति। आङ्गलास्तु वर्षशतद्वयं यावदस्मदीयं देशं प्रशासन्ति स्म। अतस्तेषां भाषायाः प्रभावोऽस्माकं भाषासु प्रत्यक्षमप्रत्यक्षं वा दृश्येत चेत् किमाश्चर्यम्। एवं हिन्दीभाषा मिश्रभाषा वर्तते।

## आर्यभाषाणां जननी वेदभाषा

प्राकृतस्य प्रायः सर्वेषु व्याकरणेषु लिखितम्—'प्रकृतिः संस्कृतम्, तत्र भवं तत आगतं वा प्राकृतम्' इति, अस्याशयः संस्कृतात् प्राकृतमुत्पन्नम्। 'प्राकृतम्' असंस्कृतभाषाऽस्ति, संस्कृतं परिमार्जिता भाषाऽस्ति। संस्कृतायाः परिमार्जिताया वा भाषाया असंस्कृतभाषोत्पत्तिः कथं सम्भवा? अशुद्धलौहात् शुद्धलौहस्य ( इस्पातसंज्ञकस्य ) निर्माणं सर्वे पश्यन्ति, परन्तु इस्पातसंज्ञकलौहादशुद्धलौहस्योत्पत्तिः कदापि केनापि न दृष्टा न च श्रुता। 'चक्षुर्वै सत्यम्' नेत्राभ्यां पश्यन्ति तदेव सत्यत्वेन स्वीकुर्वन्ति। यद् उक्तं च—

अन्तर अंगुलि चारि को झूठ साँच मे होय।
सब मानै देखी भली सुनी न मानै कोय॥

पुनः प्राकृतं कुतः समुद्भूतमिति प्रश्नस्योत्तरमस्ति-'यतः संस्कृतं समुद्भूतम्' इति। अस्येदं तात्पर्यं यत् संस्कृतं प्राकृतस्य जननी नास्ति। संस्कृतं तस्य भगिनी भवितुमर्हति। अन्यच्च प्राकृतं संस्कृतात् शतवर्षाणि प्राक्कालाद् विद्यमानमस्ति, निरुक्तकारो यास्काचार्योऽष्टाध्यायीप्रणेतुः पाणिनेर्वर्षशतानि पूर्वमभूत्। स गौतमबुद्धस्य समकालिकः स्वीक्रियते। महाभारतस्य शान्तिपर्वण एकस्मिन्नध्याये तस्य नामोल्लिखितमस्ति। निरुक्तावलोकनाज्ज्ञायते यदेकस्य शब्दस्यार्थसूचका अनेके शब्दा यास्ककाले प्रचलिता आसन्। जर्मनविद्वान् डॉ० गोल्डस्टुकरो यास्कं षष्ठशतेशवीयाब्दात् पूर्वतरं मनुते।

'चुल्लुवग्ग'नाम्नि बौद्धग्रन्थ एका कथाऽस्ति यद् द्वौ ब्राह्मणभ्रातरौ बौद्धावभूताम्। तावेकदा तथागतं बुद्धमवोचताम्—यन्नाना नामगोत्रा मानवाः प्रव्रजिताः सन्तः स्वस्वभाषासु बुद्धवचनानि पठित्वा तानि दूषयन्ति। भगवानाज्ञापयतु चेदावां तानि छन्दोबद्धानि वेदभाषानिबद्धानि वा कुर्याव। बुद्धस्तथा कर्तुं तौ निषिध्य सर्वेभ्यो मानवेभ्यः स्वस्वभाषायां बुद्धवचनं पठितुमाज्ञापयत्। एतेनेदमवगम्यते यत्तदानीं छन्दो वेदभाषा चेत्येतद् द्वयं मुख्यभाषारूपेणासीत्। अन्याश्च प्रचलिता अनेका भाषाः प्राकृतमासन्। संस्कृतस्य स्थितिस्तदानीं भविष्यगर्भगताऽसीत्। एवं स्थिते संस्कृतात् प्राकृतं कथं समुद्भवितुमर्हति।

लौकिकसंस्कृतस्यादिकाव्यं वाल्मीकीयरामायणं वर्तते। एतत् सुन्दरकाण्डस्य सप्तदशाध्याये प्रथमतरं भाषार्थे संस्कृतशब्दप्रयोगो विहितः। हनूमानशोकवाटिकायां सीतायाः पुरः स्थितो भूत्वा 'कया भाषया सीताया सह संवदेयम्' इति चिन्तापरो जातः। अनेकभाषाणां प्रचलनाभावे हनूमतस्तच्चिन्ता कथं जायेत। स ब्रवीति—

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति॥ इति

एतेन तस्मिन् कालेऽनेकभाषाप्रचलनं प्रसिध्यति, यास्वन्यतमा संस्कृतभाषाऽप्यासीत्। सा च द्विजातीनां भाषाऽऽसीत्। रावणोऽस्यामेव भाषायां सीतया संलापं करोति स्म। इत्थं भारते देशे संस्कृतादन्या अनेका भाषा द्विजातिभ्योऽन्यैर्व्यवह्रियमाणा आसन्। अतः संस्कृतं प्राकृतस्य प्रकृतिर्न भवितुमर्हति। न केवलं जैनो नमिसाधुर्वैदिककविः, राजशेखरोऽपि स्वकीयकृतौ बालरामायणे संस्कृतात् प्राकृतस्य प्रादुर्भावं नाङ्गीकृतवान्। प्राकृतात् संस्कृतस्य निर्गमस्तु सम्भाव्यते, किन्तु संस्कृतात् प्राकृतप्रादुर्भावो न सम्भाव्यते।

## वेदात् पूर्वतरा भाषा

वेद आर्यजातेः प्राचीनतमो ग्रन्थोऽस्ति। परन्तु यस्यां सुसंस्कृतभाषायां वेदानां रचना जाता, सा वेदभाषाया पूर्वं वर्षशतानि समुत्पन्ना भवेत्। अतो वेदभाषातः प्राक् कस्याश्चिद् भाषाया अस्तित्वं सुसिद्धमेव। अभिनवभाषायां तादृशा विचारकलापा नैव प्रकटयितुं शक्यन्ते, ये वेदेषु विशेषेण ऋग्वेदे समुपलभ्यन्ते।

वेदा अपौरुषेयाः सन्ति। ते न केनापि विरचिता इति सामान्यजनानां धारणा विद्यते। यद्यपौरुषेयशब्दस्यायमर्थो यत्ते केनचिन्मनुष्येण न कृताः, जाते राष्ट्रस्य वा, ज्ञानविज्ञानानुभवानां परिणामभूताः सन्ति चेत्, तत्र न कस्यचिद् विमतिः। यदि कश्चिद् ब्रूयाद् यत् परमेश्वरेण ब्रह्मणा वा लिखिता वेदा अस्माभिरुपलब्धा इति, न; मेऽभितम्। एतद्विपरीतं वेद एव मन्त्ररचनाचर्चा विद्यते।

अत्रेदं प्रष्टव्यम्—तदानीं ब्रह्मर्षीणां भाषा कासीत्? अस्मिन् विषये जैनाचार्यः सिद्धहेमचन्द्रः प्राह—'सा भाषा आर्यभाषाऽऽसीत्' इति, 'ऋषीणामिदमार्षम्'। अस्या ऋषिभाषितेति नामान्तरेण स्पष्टं प्रतीयते यदार्षप्राकृतमेव ऋषीणां भाषाऽऽसीत्। वररुचिसमये तस्या एव महाराष्ट्रीति नामान्तरं जातम्।

ईशवीयषष्ठशतकस्थो दण्डिनामाचार्यो महाराष्ट्रीं प्रकृष्टं प्राकृतं प्राह। एनामसौ महाराष्ट्रस्य भाषामप्याह। अनेन महाराष्ट्रनाम्ना बहवो जना भ्रान्ता भवन्ति। लक्ष्मीधरस्य षड्भाषाचन्द्रिकायाः सम्पादका रावबहादुरविरुदालङ्कृतः कमलाशङ्कर-प्राणशङ्कर-त्रिवेदी वर्तमानं महाराष्ट्रमेव महाराष्ट्रममन्यत। दण्डिनः समये महाराष्ट्री सर्वोत्तमं प्राकृतमासीत्, परन्तु तदानीं साम्प्रतिकं महाराष्ट्रं क्वासीत्? नामसाम्याद् धीरा अपि भ्रमन्ति।

वररुचिः स्वीये प्राकृतप्रकाशे प्रकारान्तरेण महाराष्ट्रीमेव मुख्यं प्राकृतमवोचत्। तन्मुख्यं प्राकृतं दक्षिणस्थमहाराष्ट्रस्य न, उत्तरस्थमहाराष्ट्रस्य भाषाऽऽसीत्। जाँनवीम्समहोदयः सप्तार्यभाषाणां तुलनात्मकव्याकरण एनं महाराष्ट्रदेशं युक्तमेव दूरप्रसिद्धं दोआबं राजपुत्र-(राजपूताना) देशं च निरदिशत्। मम मतेन मनुनाऽभिहितो ब्रह्मर्षिदेश एव प्राक्कालिको महाराष्ट्रदेशो भवेत्। मनुः कुरुक्षेत्रम्, मत्स्यम्, पाञ्चालं शूरसेनं च ब्रह्मर्षिदेशं प्रोक्तवान्। वर्तमाने हिन्दीयुगे यथा ब्रजभाषा काव्यभाषाऽभवत्, तथैव पूर्वस्मिन् काले महाराष्ट्रीप्राकृतं कविताभाषास्थानमधिगता भवेत्। यस्यां भाषायां दण्डिना सेतुबन्धादि-काव्यानि विरचितानि, सा महाराष्ट्री कदाचित् सर्वेषां साधारणभाषाऽऽसीत्। महाराष्ट्री ह्यन्येषां प्राकृतानां प्रकृतिरिति वादस्यायमेव हेतुर्विज्ञायते।

प्राकृतस्य प्राचीनतमं व्याकरणं चण्डकविकृतं विद्यते। नवनवति (९९) सूत्रात्मकमिदमतीव लघुतरं वर्तते। एतेनावगम्यते यदा प्राकृतं बहुभेदं नासीत् तदैतद्-विरचितम्।

हार्नलिमहोदयमतेन प्राकृतं वर्षसहस्रत्रयं प्राक् समुद्भूतम्। अतस्तत्र पैशाची-मागधीविषये सूत्रद्वयमेव लभ्यते। तत्रायं हेतुर्यत्तस्मिन् काले प्रचलितेषु प्राकृतरूपेषु वर्णोच्चारणादन्ये बहवो भेदा नोत्पन्ना बभूवुः। "षड्भाषाचन्द्रिकायाम्" षड्भाषामध्ये चूलिका-पैशाचीं विलोक्येदमवगम्यते यत् सा अर्धमागधीतः प्राक् समुत्पन्ना। यतो हि षट्सु भाषास्वर्धमागधी नाम न विद्यते, किन्तु चूलिकापैशाची नामास्ति। यद्यपि वर्तमानहिन्दी-भाषायामर्धमागधीप्रभावः सर्वाधिकोऽस्ति।

पूर्वपाञ्चालतः पश्चिमबङ्गसीमापर्यन्तमुत्तरस्यां दृश्यमानास्मदीया वर्तमानहिन्दी शौरसेनीं मागधीं चाश्रित्य निर्मिता। ते उभे माहाराष्ट्रीभेदावेव स्तः। मध्यदेशस्य भाषात्वेन्नेतस्या अयं प्रभावो वरीवर्ति। मनुस्मृतौ प्रोक्तो मध्यदेशो मनुना—

हिमवद्विन्ध्ययोर्मध्ये यत् प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥

षड्विंशाधिकाष्टादशशततम ईशवीयाब्दे कलिकातातः प्रकाशिते 'उदन्तमार्तण्ड-' नाम्नि साप्ताहिके हिन्दीपत्रे हिन्दी मध्यदेशीया भाषा कथिता। विनशनं कुत्रास्तीति प्रश्नस्योत्तरमेतद् महाभारते बलरामस्य तीर्थयात्राप्रसङ्गे प्रोक्तमिदं यद् हलायुधो बलरामः तत्पश्चाद् विनशनं प्रागाद् यत्र शूद्राणामाभ्यानां प्रति द्वेषात् सरस्वती नष्टाऽभूत्। तस्माद् ऋषिभिस्तत्स्थानं विनशनमित्युच्यते। निषादपुरपार्श्ववर्तिप्रदेशो विनशननाम्ना ख्यातः। सरस्वत्याः पूर्वभागः पृथूदके कुरुक्षेत्रे स्थाणुतीर्थेऽद्यापि दृश्यते। तत्पश्चाद्वर्ती लुप्तांश एव विनशनम्। तस्या नद्या अवशिष्टांशोऽद्यावधि उदयपुरतः पश्चिमदक्षिणदिशि मातृगया-पार्श्वतः प्रवहन् कच्छद्वारका समुद्रेण सङ्गच्छते।

प्रयागात् पूर्वतोऽर्धमागधीक्षेत्रमारभ्यते। शौरसेनी-मागधीसंयोगेनार्धमागधी-प्राकृतं सम्पद्यते। अस्मिन् प्राकृते मागधीशौरसेन्योरुभयोर्गुणा दोषाश्च विद्यन्ते। इयं

शौरसेनीं मागधीं च परस्परं योजयति। महाराष्ट्री प्राकृतं बहुमहतो भूभागस्य भाषा भूत्वापि पश्चाद् मागधीसम्पर्केण सार्धमागधीस्वरूपाभवत्। महाराष्ट्री-शौरसेनी च मागधी-संपृक्ते भूत्वा बहूनि परिवर्तनान्यन्वभूताम्, परन्त्वर्धमागध्येव वर्तमानहिन्दीभाषाया आधारभूमिः। महाराष्ट्री-शौरसेनी-मागधीति भाषात्रययोगेन निर्मितार्धमागधी एवाखिलभारतीया भाषा आसीत्। इयं यत्र गता, तत्रैव भाषाभिः सन्धिं विधाय स्वामित्वमवाप।

विन्ध्यगिरिमुत्तीर्य यदा हिंन्दी वर्तमानबुन्देलखण्ड-बाघेलखण्डौ प्रविष्टा, तदा सा पश्चिमहिन्द्या महाराष्ट्र्याः शौरसेन्या वा प्राधान्यं कृतवती। परन्तु नेमाडं प्राप्य पूर्वीयहिन्दीवेषमाश्रयत्। रुहेलखण्डोत्तराखण्डयोः पश्चिमी हिन्द्येव प्रावर्तत। सत्यावश्यकत्वे सा स्वस्वरूपपरिवृत्तौ सङ्कोचं नानुभूतवती।

यवनानां भाषा हिन्दी प्राकृतं वा नासीत्, किन्तु यवनदेशीयानामनेकभाषाणां विशेषेणारबीतुरुष्कभाषाणां च शब्दैः प्रचुरा फारसीभाषाऽऽसीत्। ते देशमिममाक्रामन्तः प्रविश्य, पश्चात् प्रशासका बभूवुः। तैरत्रत्या भाषा अभ्यस्ताः। ते स्वशब्दानां प्रयोगाणां चास्माकं भाषाभ्य आदानप्रदाने चक्रुः। कतिपये जना एव देशेनानेनानुप्राणिता अस्य देशस्य रागरक्ता बभूवुः। शेषाश्चात्मानं वैदेशिकं विजेतारं चामन्यन्त। तथाप्यत्रत्यानां ध्वनिविशेषाणामुच्चारणाय ते स्वकीयफारसीलिप्यां नूतनाक्षराणि निरमासिषुः। ईरानदेशे तत्रत्यानाम् 'पे, चे, जे, गाफ' वर्णानां कृते आक्रामका अरबाः स्वलिप्यां चत्वार्यक्षराणि बर्द्धयित्वा द्वात्रिंशदक्षराणि चक्रुः। तथा च हिन्दी लिपिस्थानाम् 'ट, ड, ड़' वर्णानामुच्चारणार्थं व्यवस्थामकार्षुः। एवं सङ्कलनेन यवनानीलिप्यां पंचत्रिंशदक्षराणि जातानि। हिन्दी-लिप्याम् 'क, ख, ग, फ, ज' वर्णानामधस्ताद् बिन्दुं निधाय 'काफ़, ख़ ग़ैन ज़ फ़' वर्णानामुच्चारणं चक्रुः। कतिपये जनाः 'ऐन' वर्णोच्चारणार्थम् अवर्णं निरमासिषुस्तद् व्यर्थमेव। अत्रत्या जना ऐनवर्णोच्चारणं जानन्त्येव न। अन्यच्च 'ऐन'वर्णाभिव्यक्तये इकारोकारयोरधोबिन्दुन्यासोऽनिवार्यः। यतः 'इल्म, उलूम' शब्दौ ऐनवर्णेनैव प्रारभ्येते।

कतिपये संस्कृतसुधियः सामान्यजनाश्च संस्कृतं न केवलं प्राकृतस्य, किन्तु विश्वस्य सर्वासां भाषाणां जननीं विदुः। अज्ञानविजृम्भितमेतत्तेषाम्। संसारे देशभेदेन कालभेदेन चानेका भाषाः प्रादुरासन्, परं तासु कतिचिदेव परस्परं सम्बद्धाः सन्ति।

इदानीमहमेतद्वक्तुकामो यद् विश्वस्यानेकभाषास्वार्यजातीया भाषाः सामीजातीयभाषाश्च परमां प्रसिद्धिं प्राप्ताः। आर्यजातीयभाषासु संस्कृत-पालि-प्राकृत-लैटिन-फारसी-जैन्दप्रभृतयो विद्यन्ते। सामीभाषासु च बैबिलोनियन-खाल्डी-पणि-हिब्रू–अरबीत्यादयस्सन्ति। आर्यभाषाणामिव सामीभाषाणामपि काचिद् मूलभाषा भवितुमर्हति, परन्तु नैतद्विस्मर्तव्यम्, यत् कस्याश्चिदार्यभाषाया न काचित् सामीभाषा समुत्पन्ना; न च सामीभाषायाः काचिदार्यभाषा सञ्जाता। आर्यभाषासु यथा परस्परं भगिनीत्वम्, तथैव सामीभाषास्वपि।

आर्यभाषासु वर्तमानध्वनीनामुच्चारणं कर्तुं सामीभाषाभाषिणो न क्षमन्ते। सामीभाषाध्वनीनां तदुच्चारणमार्यभाषाभाषिणां कृतेऽसम्भवमिव जायते। अस्माभिर्विनिर्मितानामपि कतिचिद् वर्णोच्चारणानामस्माकं प्रकृतिभिः सह सामञ्जस्यं नोत्पद्यते। अत एवोच्चारणसमस्यायाः सर्वथा समाधानं न जातम्। अस्माकं ध्वनीनामुच्चारणाय सामीभाषायां कृताया व्यवस्थाया अपि इयमेव स्थितिः। एतेन भाषाणां परस्परसम्बन्धज्ञाने साहाय्यं लभ्यते।

वेदभाषाया जेन्दभाषया सह सर्वतोऽधिकं नैकट्यम्, तथैव संस्कृतस्य फारसीभाषया नैकट्यम्। जेन्दभाषा पारसीकानां धर्मभाषाऽस्ति। तस्यामेव 'अवेस्ता' ग्रन्थो निबद्धः। तदनन्तरं योरोपीयलैटिनाङ्गलादिभिः सम्बन्धोऽस्ति।

सामीभाषास्वरबीब्रान्यौ चातीव सन्निहिते। अयं निष्कर्षोऽस्योक्तेर्यदुभयोर्जात्योरमीषु भाषासु मौलिकभेदो विद्यते। अत एकस्या भाषातोऽन्यभाषाया उत्पत्तिः सर्वथाऽसंभवाऽस्ति। एकस्याः शब्दानामन्यस्यां प्रवेशश्चेन्नात्राश्चर्यम्। अयमादानप्रदानभावोऽस्वाभाविको नास्ति। संस्कृतादिभाषाणां परस्परसान्निध्यं प्रदर्शनाय कतिचिदुदाहरणान्युपस्थाप्यन्ते—

| सं० | फा० | लै० | अं० | हि० |
|---|---|---|---|---|
| पितृ-पितर | पिदर | पेटर | फादर | पिता-बाप |
| मातृ-मातर् | मादर | मेटर | मदर | माँ-अम्मा |
| भ्रातृ-भ्रातर् | बिरादर | फ्रेटर | ब्रदर | भाई |

अधो गदितैश्शब्दैः संस्कृतफारसीभाषयोः साम्यातिशयः प्रतीयते—

| सं० | फा० | हि० |
|---|---|---|
| श्वसुर | खुसुर | ससुर |
| जामातृ, जामाता | दमाद | जमाई |
| नप्तृ | नबीर | नाती |
| शालि | साली | धान |
| गोधूम | गन्दुम | गेहूँ |

एतस्य विंशशतकस्यारम्भे डॉ० हार्नलिराधुनिकभाषाणां व्युत्पत्तये ज्ञानाय च प्राकृतानुशीलनस्योपयोगितां प्रावोचत्, परन्तु तदुपेक्षितमेव जनैः। चण्डकविना लिखितं 'प्राकृतलक्षणम्' नाम प्राकृतव्याकरणं नवनवतिसूत्रात्मकमेव। डॉ० हार्नलिमतेन प्राकृतव्याकरणं सार्धसहस्रवर्षप्राचीनमस्ति। पुरातत्त्वसुविचक्षणो जनरलकनिंघमः कथयति यदशोकस्य शिलालेखैर्भारतीयाधुनिकभाषाणां सम्यग् ज्ञानं भवितुमर्हति। स वदति—भारतस्य जनभाषामननाय 'अशोकशिलालेखाः' बहुमूल्यवन्तः सन्ति, यतस्त ईशवीयाब्दात् प्राक्तनतृतीयशतकस्थजनानामसन्दिग्धां प्रामाणिकीं भाषामुदाहरन्ति, यथैत उत्कीर्णलेखाः प्रक-

टयन्ति । परस्परं संलप्यमानेयं भाषा हिमवद्विन्ध्ययोर्मध्यभागे, सिन्धुनद्या आरभ्य गङ्गोद्गमस्थानान्तं विस्तृत उर्वरक्षेत्रे व्यवहृताऽऽसीत् ।

भेदानां कतिपयानि निश्चितचिह्नान्यशोककालिकान् पालिप्राकृतयोः कतिचित् स्पष्टान् भेदान् सूचयन्ति—गान्धालीयाथवोत्तरपश्चिमीयोपभाषा, औज्जयिन्यथवा मध्यदेशस्योपभाषा मागध्यथवा पूर्वीयोपभाषा ।

केचनैवं शङ्कन्ते यद् बुद्धेन न केवलं जनभाषैव, संस्कृतमपि व्यवहृता भवेत् । सत्यमिदम्, किन्तु कस्यचिदशोककालिकसंस्कृतशिलालेखस्यानुपलम्भात् तत्काले संस्कृतास्तित्वे सत्यपि जनभाषातस्तस्या महत्त्वमल्पतरमेवासीदिति प्रतीयते ।

संस्कृतप्राकृतयोरुभयोस्तदानीं प्रचलनमासीदिति रामायणोल्लिखितादवतरणात् सुस्पष्टं ज्ञायते । परन्तु तयोरध्ययनं मननं च तस्मिन् प्राचीनकालेऽप्यासीत्, इत्येतत्प्राकृतस्य वाल्मीकिसूत्रैः प्रमाणीक्रियते । तानि सूत्राणि त्रिविक्रम-लक्ष्मीधर-सिंहराजकृतेषु प्राकृतव्याकरणेषूपलभ्यन्ते । रायबहादुरत्रिवेदिभिः षड्भाषाचन्द्रिकायामेतच्छङ्कितं यदिमानि सूत्राणि रामायणकृतो वाल्मीकेरन्येन वाल्मीकिना कृतानीति तेषामनुमानमात्रमेव । त्रिविक्रमादिभिः कैश्चिदपि ईदृश आशयो न क्वापि प्रकटीकृतः । त्रिविक्रमो जैन आसीद्, अन्यावजैनावास्ताम् । शम्भुरहस्यनाम्नि काव्ये तानि सूत्राणि रामायणकर्तुरेवोक्तानि । तत्र न कस्यचिदन्यस्य वाल्मीकेश्चर्चा श्रूयते ।

लक्ष्मीधरः काश्यपगोत्रस्तैलङ्गब्राह्मण आसीत् । स कृष्णनद्यास्तटे स्थिते चरकूरिकुले जन्म लेभे । तत्कुलदेवता वेङ्कटेश्वर आसीत् । सप्तगोत्रपर्यन्तं तद्गृहे लक्ष्मीसरस्वत्योरुभयोर्वास आसीत् । अस्मिन्नेव वंशे तिम्मय्या जन्म लेभे, यः सोमेनायष्ट । स्वयं लक्ष्मीधरो दक्षिणामूर्तेः शिवस्योपासक आसीत् । लक्ष्मणसूरिरित्यपि तस्य नामान्तरम् । स षड्भाषाचन्द्रिकाप्रणयनं विधाय गीतगोविन्दे 'श्रुतिरञ्जनीम्' टीकां च विधाय प्रसन्नराघवस्यापि व्याख्यां चकार । त्रिविक्रमो वाल्मीकिसूत्राण्याश्रित्यैव स्वं प्राकृतव्याकरणं विदधे । सिंहराजोऽपि प्राकृतरूपावतारे वाल्मीकिसूत्राण्येवानुसृतवान् । सिंहराजपितुर्नाम समुद्रबन्धयज्वाऽऽसीत् । नाम्नैव स वैदिकः प्रतीयते ।

षड्भाषाचन्द्रिकायामपि वाल्मीकिसूत्राण्युपयुक्तानि सन्ति । अस्याः संस्कर्तुः त्रिवेदिनो मतेनेमानि प्राकृतसूत्राण्यन्येन केनापि वाल्मीकिना विरचितानि, न तु रामायणप्रणेत्रा वाल्मीकिना । परन्तु लक्ष्मीधरस्तानि सूत्राण्यसंशयं रामायणकर्तुरेव मनुते । अनेके कालिदासा अभवन्निति मन्यते जैनः, परन्त्वनेकवाल्मीकिकल्पनातीव नवीनाऽस्ति । यद्वा तद् वा भवेत् । त्रिविक्रमलक्ष्मीधरसिंहराजेषु कतमोऽपि तेषां सूत्राणां रामायणकर्तृकर्तृत्वे सन्देहं न भजते ।

वाल्मीकिसूत्राणि यस्य कस्यापि वाल्मीकेर्भवेयुर्नाम, संस्कृतज्ञा अपि प्राकृतमहत्त्वं स्वीचक्रुः । पाणिनिना समुल्लिखितेषु स्वपूर्ववर्तिष्वेकादशवैयाकरणेषु शाकल्यस्यापि नामास्ति ।

उत्कल ( ओड़िया ) पण्डितः कवीन्द्रो मार्कण्डेयः स्वप्राकृतसर्वस्वारम्भे यान् श्लोकानलिखत् तेषु शाकल्यस्यापि नाम वर्तते । ते चेमे श्लोकाः सन्ति—

शाकल्य-भरत-कोहल-वररुचि-भामह-वसन्तराजाद्यैः ।
प्रोक्तान् ग्रन्थान् नानालक्ष्याणि च निपुणमालोक्य ॥
अव्याकीर्णविशदसारं    स्वल्पाक्षरग्रथितपद्यम् ।
मार्कण्डेयकवीन्द्रः    प्राकृतसर्वस्वमारभते ॥

सर्वप्रथमं शाकल्यस्य नाम्नाऽवगम्यते यत्तेनापि प्राकृतं व्याकरणं लिखितं भवेत् । ये चाहुः—"उच्चारणभेदादिकारणैः संस्कृतादेव यथाकथञ्चित् प्राकृतं निरगच्छत्" इति तेषामियं कल्पना असंशयं निराधाराऽस्ति । अत्रेदं तत्त्वम्—वैदिकभाषात एव संस्कृतप्राकृते निर्गते स्तः । संस्कृतपण्डिता यदा प्राकृतज्ञानेऽशक्ता बभूवुस्तदा तेषां सौकर्याय प्राकृतसिद्धान्ताः संकृतसूत्रेषु निबद्धाः । अस्माद्धेतोः सर्वाणि प्राकृतव्याकरणान्यद्य संस्कृतसूत्रेषूपनिबद्धानि दृश्यन्ते ।

पालिरपि संस्कृतसंस्कारसंशोभितं प्राकृतमेव । प्रायः समस्तं बौद्धसाहित्यं पालिभाषायामेव । एतद्विपरीतं जैनैरपि प्राकृतमाश्रितम् । जैनसाहित्यं शौरसेन्यामपि विद्यते, किन्त्वर्धमागधीभाषायामधिकतरं विद्यते ।

## हिन्द्या विविधनामानि

पड्भाषातो यदा हिन्दीभाषाधुनिकरूपेणालङ्कृता, तदा तस्या अनेकरूपाणि दृष्टानि । रूपमेकं हिन्दीनामाङ्कितं विधाय यवनैः स्वीकृतम् । रूपान्तरस्य हिन्दुभिर्भाषेति संज्ञा कृता । परमेतस्या भाषाया अपि रूपद्वयं जातम् । एकं रूपं तु सूर-तुलसी-केशवादिकवीनां काव्येषु प्रत्यक्षीक्रियते, द्वितीयं रूपं मनुस्मृत्यादिसंस्कृतग्रन्थानां टीकाग्रन्थेषूपलभ्यते। परन्तु द्वितीयं यावनी हिन्द्या उर्दूभाषाया वा प्रतिरूपमेव । कालक्रमेणास्याः 'खड़ी बोली' संज्ञा सञ्जाता ।

खड़ीबोली संज्ञाकरणेऽपि हेतुः । यावनीभाषायां संवक्तुं तेषां भाषा सदृश्येयं भाषा आश्रयणीयेति ज्ञात्वा जना हिन्दुत्वपूर्णां हिन्दीं 'खड़ी बोली'संज्ञितां चक्रुः । सैव 'खड़ी बोली' वर्षशतेषु गतेषु हिन्दीनाम्ना प्रथिता । एवं हिन्दी-उर्दू चेति द्वे एवं परस्परमति नैकट्यमधिगते । द्वयोर्मुख्यमन्तरमुभयोर्जात्योर्भावव्यक्तिमात्रमेवावशिष्टम् । केवलं टीकाग्रन्थानां लेखन एव हिन्दूनां 'खड़ी बोली' प्रयुज्यते स्म ।

प्रादेशिकोपभाषाणां प्रयोगः काव्य एवाजायत । 'खड़ी बोली' हिन्दूनां जनभाषासदृश्यासीत् । अस्याः प्रयोगः संवादे, विशेषतो यवनैः सह संवादेऽभवत् । एतस्या नाम कवयो नाद्रियन्त । अत एव तस्या नागरीति नामान्तरं कृतम् । कालक्रमेण हिन्दवीयहिन्द्या नाम 'अन्तर्वेदीयनागरी' अभवत् । अन्ते हिन्दी-यावनीभाषयोर्भेदं बोधयितुमेकस्याः 'नागरी' अन्यस्याः 'उर्दू' नाम प्रसिद्धमभूत्। नागरीलिप्यां लिख्यमानत्वादेव हिन्दवीयहिन्द्या

नागरी नामासीत् । 'नागरीप्रचारिणीसभा'नाम्ना हिन्दीसभानां स्थापनाया अप्ययमेव हेतुः । नागरप्राकृतेनापि सह नागरीसम्बन्धो दर्शितो भवति। नागरं तु महाराष्ट्री-शौरसेन्योस्तु सङ्करादिति प्रसिद्धमेव ।

हिन्दी भारतस्याति महती भाषाऽस्ति। सोत्तरस्यां हिमाचलादारभ्य दक्षिणस्यां कन्याकुमारीं यावत् पश्चिमेऽटकादारभ्य पूर्वस्यां कटकपर्यन्तं बुध्यते। तत्कारणमिदं यत्र यत्र हिन्दूतीर्थानि वर्तन्ते, तत्र तत्रैषा समानभाषाऽस्ति। तीर्थानि च कुत्र न सन्ति ? यद्यपि प्रयागस्तीर्थराज उच्यते, तथापि सर्वेषामेव हिन्दूनां यदि किमपि तीर्थं तद् गयातीर्थं विद्यते। यत्र सवर्णा वर्णविहीनाश्च सर्वे हिन्दवः स्वपितॄणां तारणाय पिण्डानि ददते। द्वादश ज्योतिर्लिङ्गानि काश्मीरतो रामेश्वरं यावद् विराजन्ते। मोक्षप्रदाः सप्तपुर्योऽपि भारत एव वर्तन्ते। आस्तिका हिन्दुजनास्तेषां यात्रां कुर्वते। यद्यपि तेषु स्थानेषु कतिपयानामेव भाषा हिन्द्यस्ति, परं यात्रिणः, जनाः, तीर्थस्थाः पुरोहितादयोऽपि यथा कथञ्चिद् हिन्दीं व्यवहरन्ति। केवलं तामिलनाडे मद्रप्रान्ते च किञ्चिद् काठिन्यं जायते। तथापि काञ्चीपुर्यां काञ्जीवरे च हिन्द्या निर्वाहो जायते—बङ्गशिक्षामन्त्रिणो रायहरेन्द्रनाथचौधरीमहाशयस्येयमनुभूतिः ।

ईशवीयत्रयोदशशताब्द्यां यवनशासकाः दिल्लीसिंहासनमधिरूढा आसन्; फारसीभाषाव्यवहारिणोऽपि ते हिन्दीमभ्यस्तवन्तः। बहुवर्षाभ्यासेन ते व्यवहारयोग्यां हिन्दीमशिक्षन्त। इह शासकभाषाभ्यासार्थं हिन्दवोऽपि प्रयतमाना बभूवुः। तत्परिणामत एतादृशी भाषा निर्मिता, या न फारसी, न च हिन्दीति वक्तुं शक्यते। हिन्दवो यद् भाषायां लिखन्ति स्म तां भाषामित्याचक्षते स्म, रामचन्द्रिका रामचरितमानसं वा भवेत्, अथवा मनुस्मृत्यादिधर्मग्रन्थानां टीका स्यात्। सा टीका भाषाटीकैवोच्यते। यवनैर्भारतीयप्रजाज्ञानाय लिखितं तत्ते हिन्दीति वदन्ति स्म। भाषाटीकाया रूपद्वयमासीत्—एका पाण्डित्यमयी, अपरा व्यवस्थिता। व्यवस्थिता भाषा यावन्या सह बहु सादृश्यं भजते स्म। कालक्रमेणोभे एव हिन्दी नाम प्रापताम्। यद्यप्युभयोर्हिन्द्योः शब्दसंबन्धे किञ्चिद् भेदोऽवर्तत।

अमीरखुसरो-सय्यदबन्दानवाज-मेसूदराजप्रभृतयो य पूर्वकवयोऽस्माभिर्विदितास्ते हिन्दीभाषायां काव्यमरचयन्। परं तत्काव्यं प्रायेण फारसीलिप्यामेव। हिन्दुभिर्व्रजभाषायां बैसवाड़ीभाषायां वा काव्यं निर्मीयते स्म। फ़ारसीलिप्यां लिखिताया हिंद्या भारते प्रचारश्रेयो यवना अदीबा साहित्यकारा वा अलभन्त। ते तां हिन्दीं गुर्जरे दक्षिणे भारते च प्रसारयामासुः। सा गुर्जरे (गुर्जरीया) = (गूजरी) दक्षिणे दाक्षिणात्येति (दकनी)। देहल्यां राजधान्यामपि सैव पदमलभत। दक्षिणे यवनराज्यविस्ताराय विधास्यमानाक्रमणार्थं देहलीतो न केवलं सेना गच्छति स्म, वणिजः कर्मचारिणश्चाप्यगच्छन्। उत्तरे वर्षशतातिक्रान्तत्वात् तत्रत्यजनानां भाषां शासकाः कर्मचारिणश्च बोद्धुं क्षमन्ते स्म। परन्तु तेलगुकन्नड़ादिदाक्षिणात्यभाषाभाषिणां भाषावबोध उत्तरीयहिन्दूनां कृते कठिनो

यवनानां कृतेऽसम्भव एवासीत् । अतो यावनी हिन्दी तत्र सेतुरिवाभवत् । तस्यां राजस्थानीयगुर्जरीयतेलगुकन्नडशब्दानां समावेशेन सा बहु मिश्रिताऽभूत् । हिन्द्यां फारसीप्रभावकालारम्भो निश्चयेन न वक्तुं शक्यते । यतो हि शहाबुद्दीनमुहम्मदगोरी-पृथ्वीराजयोः सङ्ग्रामे शहाबुद्दीनविजयेन भारतवर्षे यवनशासनस्य शिलान्यासोऽभूत् । अत एव 'पृथ्वीराजरासो'-इति काव्ये प्रचुरा यावनीशब्दाः प्राप्यन्ते ।

परन्त्वेतद्देशस्य साहित्यसंसारे प्रथमः प्रवेशः 'अमीरखुसरो'कविनैव कृतः । खुसरो जन्मना तुरुष्क आसीत् । परन्तु तस्य जन्मैहैवैटामण्डलस्य पटियारी ग्रामेऽभवत् । असावरबी-फारसीप्रभृतीनां भाषाणां ज्ञानेन सहास्य देशस्य ( बोली ) वाचामपि बहुज्ञ आसीत् । स देहल्यामेकादशशासकानां सिंहासनारोहणावरोहणयोर्द्रष्टासीत् । सप्तशासकानां तु स सभाकविरेवासीत् । स अलाउद्दीनखिलजीसमकालिकः सन् अशीतिवर्षवयस्को भूत्वा पंचविंशत्युत्तरत्रयोदशशताब्दे परलोकमगात् । एवं चतुर्दशशताब्द्यां यवनविद्वांसो भारतीयसाहित्यक्षेत्रमवातरन् । तदानीमेव यवनाः शासका विजयाय दक्षिणाशां प्रतस्थिरे । तैः सह व्यापारिणः सैनिकाः साहित्यिकाश्च तत्र गता अभूवन् । अमुना प्रकारेण तत्र दाक्षिणात्य( दकनी )हिन्द्याः प्रवेशोऽभूत् ।

अत्र डिङ्गलविषयकां स्वल्पतरां चर्चां कृत्वैव विषयान्तरप्रवेश औचित्यमालम्बते । भाषाया देशस्य च विभागाभ्यां समुत्पन्नेषु अपभ्रंशस्वरूपेष्वन्यतमं स्वरूपं डिङ्गलनाम्ना प्रसिद्धम् । राजपुत्रीयदेशस्य कविताऽस्यामेव भाषायां निबद्धा । राजपुत्रीयवाग्भिरियं प्रचुरं साम्यं भजते । मारवाड़ीवाणी समस्तराजपुत्रीयदेशस्य वाणीति बहूनां भ्रमः । बीकानेर-जोधपुरयोर्भाषैव वस्तुतो मारवाड़ी वर्तते । परन्तु या लोके मीरवाड़ीत्युच्यते सा वस्तुतो जयपुरशेखावाटीभागस्य वाणी विद्यते, परन्तु राजपुत्रीयसदृशीं भाषामनुकरोति । यद्यपि जयपुरीयादयो वाण्योऽन्योन्यं भिन्नाः सन्ति । एतासु सर्वास्वेव किञ्चित् साहित्यमस्ति, परन्तु तत् डिङ्गलसाहित्यमेव मन्यते । राजपुत्रीयेतिहासानुसन्धानाय भाषाणामवगमाय च डिङ्गलापभ्रंशज्ञानमतिशयेनापेक्षितं वर्तते ।

हिन्दीभाषेतिहासे दाक्षिणात्य( दकनी )हिन्द्या न कापि चर्चा कृतास्ति । उत्तरभारते यथा यवनसाहित्यकारैः काव्यरचना कृता, तथैव दक्षिणेऽपि कृता । दाक्षिणात्यकविषु मुल्ला बजही, गवासी, नसरतीप्रमुखा अतिप्रसिद्धाः सन्ति । अहमदाबादीयमुहम्मदवली-उल्लावली तु लोकैः रेख्ताजनकः कथितः । वलीकवेः 'दीवानाख्यः' काव्यसङ्ग्रह एकोनविंशत्युत्तरसप्तदशशततमेऽब्दे देहलीं गतोऽभूत् । इतः प्राक् प्रचुरं काव्यं गोलकुण्डशासकानां संरक्षणे कृतमासीत् । दाक्षिणात्यकवीनां सबरसकुतुबमुश्तरीप्रभृतीन् 'दकनी'हिन्दीकाव्यग्रन्थान् देवनागरीलिप्यां प्रकाशितान् कृत्वा हैदराबादस्थ 'दक्खिनीहिन्दी' प्रकाशनसमित्या हिन्दीसाहित्यस्य परमोपकारो विहितः ।

उत्तरे चिरकालपर्यन्तं यवनकवयः फारसीभाषायां काव्यं चक्रुः । परन्तु फारसी तेषां मातृभाषा नासीत् । अतस्तेषां फारसीकाव्ये आधुनिकहिन्दीलेखकानां काव्येष्विव शब्दा-

४

डम्बरादन्यत् किमपि तत्त्वं नासीत्। अतस्ते रेख्तां श्रेष्ठतरां मत्वा तस्यां काव्यं कर्तुं प्रवृत्ता बभूवुः।

हिन्दीभाषाया एव 'रेख्ता' इति नामान्तरमस्ति। परन्तु तन्नामप्रारम्भकालो न सम्यग् विदितः। एतन्नामविषये मौलानामुहम्मदहुसेनमहोदयो ब्रवीति—विभिन्नाभिर्भाषाभिः पुष्टीकरणादियं रेख्तासंज्ञां लेभे, यथा इष्टिकाभिर्मृदादिना च भित्तेः पुष्टिः क्रियत अथवा रेख्ताशब्दार्थोऽस्ति व्याकुलिता। अस्या वाक्यानि पीडितानि व्याकुलानि मिश्रितानि वा सन्तीति रेख्तासंज्ञा दीयत इति 'आवेहयात' इति पुस्तके एकविंशपृष्ठे लिखितम्। उभावर्थौ युक्तौ स्तः। साऽनेकभाषाभिः पुष्टिं नीतास्तीति प्रथमार्थस्याशयः। द्वितीयार्थेन सा मिश्रितेति प्रतीयते। पादरीवेटोऽपि तथैवाह। स्वर्गीयः प० पद्मसिंहशर्म्माऽपि 'हिन्दी उर्दू हिन्दुस्तानी' इति शीर्षके स्वव्याख्यानेऽकथयत्—रेख्ताशब्दस्य पूर्वतरः प्रयोगः सादी दकनीभाषायां लभ्यते। तत्पश्चादन्यैरपि कविभिर्लेखकैश्चास्य प्रयोगः कृतः। रेख्ताशब्देन प्राक पद्यभाषाबोध एव जायते स्म।

महाराष्ट्रीप्राकृतमिव रेख्ताभाषाऽपि पूर्वकाले पद्यभाषैव भवेदित्यनुमीयते। अनन्तरं गद्यप्रचारे संजाते सा गद्यकाव्येऽपि प्रयुक्ताभूत्। अत एव लल्लूलालमहोदयः प्रेमसागरस्य भाषां रेख्ताभाषामवदत्। रेख्ताख्ये छन्दसि निर्मिते अन्यैरपि रेख्ता लिखिताः। कबीरकृता अपि रेख्ताः सन्ति। खुसरो मृत्योः त्रिसप्ततिवर्षाणि पश्चात् कबीरो जन्म लब्धवान्। एतेनानुमीयते यत्कबीरकाले छन्दोरूपेण भाषारूपेण च रेख्तानामप्रसिद्धिरजायत। कबीररचिता रेख्ता उदाह्रियते, यथा—

विना वैराग कहु ज्ञान केहि काम का। पुरुष विन नारि नहिं शोभ पावै॥
स्वांग तो साहु का काम है चोर का। कपट की झपट में बहुत धावै॥
बात बहुत कहै झूठ छूटै नहीं। मुख के कहै कहाँ खाँड खावै॥
कहै कबीर जब काल गढ़ घेरिहै। बात बहु बकै सब भूलि जावै॥

हीरा पायो गांठ गठियायो बार बार वाको क्यों खोलै।
हल्की थी तब चढ़ी तराजू पूरी भई तब क्यों तौलै।
हंसा पाये मानसरोवर ताल तलैया क्यों डोलै।
तेरा साहिब है घट माहीं बाहेर नैना क्यों खोलै॥

कबीरात् पश्चाद् एकोनसप्तत्युत्तरैकोनविंश ईशाब्दे श्रीनानकसाहब आविर्बभूव। तस्य भाषा कबीरभाषासादृश्यशालिनी वर्तते। कबीरस्यैकमिदं पद्यं ग्रन्थसाहबनाम्नि धर्मग्रन्थे प्रवेशं प्राप्तवान्, यतो हि प्रायेण सिक्खानां मुखाच्छ्रूयते—

सूरा सोइ सराहिये लड़े धनी के हेत।
पुर्जा पुर्जा कटि मरै तऊ न छाँड़े खेत॥

नानकमहोदयस्येदं पद्यमपि रेख्तायमानमस्ति।

इस दमदा मैनूं की बेभरोसा। आया आया न आया न आया॥
या संसार रैन दा सुपना। काह दीखा कहिं नांहि दिखाया॥
सोच विचार करैं मत मन में। जिसने ढूंढ़ा उसने पाया॥
नानक भगतन के पद परसे। निसदिन राम चरन चितलाया॥

एतस्मादनन्तरमुत्तरेऽकबरशासनकाले भाषायां बहूनि संशोधनानि परिवर्तनानि चाभूवन्। अकबरस्य महामन्त्री नवाबोपाधिकोऽब्दुररहीमखानखाना महापण्डितो बभूव। स बहुभाषाणां वाचां चाभिज्ञ आसीत्। तेन संस्कृत-हिन्दीमिश्रितानि पद्यानि विरचितानि, येषां दिङ्मात्रमुदाह्रियतेऽधस्तात्। एतस्य हिन्द्यधुनावधिकहिन्दीतोऽधिकतरं शुद्धा स्पष्टा चास्ति। यतो हि सा वाचान्तरैर्न प्रभाविताऽस्ति—

एकस्मिन् दिवसेऽवसानसमये मै था गया बाग में
दृष्ट्वा तत्र कुरङ्गशावनयना गुल तोड़ती थी खड़ी।
उन्मद्भ्रूधनुषा कटाक्षविशिखैः घायल किया था मुझे
नो जीवामि त्वया विना श्रृणु सखे तू यार कैसे मिले॥

खानखाना दैवज्ञोऽप्यासीत्। तस्यैकं हिन्दीवचनमेतच्छृण्वन्तु—

यदा शत्रु खाने पड़े उच्च का, करे खाक दौलत फिरे जावजा॥

इत्यलं बहुभिरुद्धरणैः।

## दाक्षिणात्या ( दकनी ) हिन्दी

अहमदाबादस्य मुहम्मदवलीउल्ला रेख्ताजनकः "बाबा-ए-रेख्ता" कथ्यते। यद्यपि रेख्ताशब्दप्रचलनं कबीरकालादेवास्ति। वलीकवेर्दीवानाख्यो गजलसंग्रह एकोनविंशाधिक-सप्तदशततमेशवीयाब्दे दिल्लीं जगाम। वली च मुहम्मदशाहकाले दिल्लीमगमत्। वलीकवेः लयानुसारेणैव दिल्लीनगरे कवित्वारम्भस्य जातत्वेन स वली रेख्ताजनकः कथ्यते।

रेख्ताविषये डॉ० फैलनेनालेखि— यत्पुरुषैरुच्चारिता हिन्दुस्तानीभाषाऽस्ति। रेख्ती-नारीणां वागस्ति। इयं स्त्रीसुलभैः लयैर्भावभङ्गैश्च सहोच्चार्यते। पादरीवेटमतेन हिन्दुस्तानी भाषा मिश्रितभाषात्वेन रेख्तानाम्ना प्रसिद्धा।

हिन्द्याः पश्चाद् रेख्ता तत उर्दू इति त्रीणि नामानि भाषाया यवनैः प्रचालिता-न्यासन्। किन्त्वेतस्मिन्नन्तर एव दाक्षिणात्यभाषायाः ( दकनी ) इति चतुर्थमपि नाम प्रचलितमासीत्। या विजिगीषा यवनान् तेषां देशाद् भारतं प्रापयत्, सैव तानुत्तरतो दक्षिणमनयत्। तत्रत्यं गुर्जरीयमहाराष्ट्रीतिभाषाद्वयमार्यभाषायां गण्यते, तेलगुः कन्नडीया च द्राविडभाषासु गण्येते। गुर्जरीयशायरः ( कविः ) वली रेख्ताजनकोऽभूत्। तत्प्रकारमाश्रित्य कृता उर्दूकविता 'शायरी'संज्ञां लेभे। परन्तु दक्षिण आन्ध्रकर्नाटकयोः आक्रामकैर्यवनैः सह गतानां कवीनां कविता भिन्नस्वरूपाऽऽसीत्। अस्यां पाञ्चाली-मारवाड़ी-तैलङ्ग-कन्नडभाषायां शब्दैः सह हिन्दीप्राचीनरूपाणामरबीफारसीशब्दानां यत्र तत्र वाक्यांशानां च दर्शनं जायते।

हिन्दुयवनयोः प्रेमव्यवहारोत्पादनस्य श्रेयोभाक् अकबर उच्यते। परन्तु दाक्षिणात्य-हिन्दुयवनास्तच्छ्रेयोभागिनः सन्ति। तत्र सूफीशायराणां महानुद्यमोऽस्ति। सम्प्रति वयं दाक्षिणात्यहिन्दूनां धर्मदृढतामतिशयेन शृणुमः। परन्तु प्राचीनकाले तदभाव आसीत्। अन्यथा गङ्गूब्राह्मणो भूत्वा हुसेननामानं स्वशिष्यमनुयायिनं वा नाकरिष्यत्। हुसेनः स्वस्थापितराजस्य ब्राह्मण( बहमनी )राज्यमिति नाम च नाकरिष्यत्। अन्यच्च स गङ्गू-ब्राह्मणं स्वमन्त्रिपदमलम्भयत्। तदा प्रभृति दाक्षिणात्ययवनानां राज्ये ब्राह्मणा राजस्व-मन्त्रिणोऽभूवन्।

गोलकुण्डाराज्यमष्टादशोत्तरपञ्चदशशततम ईशाब्दे स्थापितम्। दकनी (दक्षिणात्य)-भाषाया आद्यः कविः शुजाउद्दीननूर्थासीत्। स अकबरमन्त्रिणः फैजीनामकस्य मित्रं समकालिकश्चासीत्। स गोलकुण्डास्थस्याबुलेहुसैनकुतुबशाहमन्त्रिणो गुरुरासीत्। अस्य कतिपयानि नज्मानि ( कवित्वानि ) प्राप्यन्ते। तानि चैतिहासिकतत्त्वसंयुतानि सन्ति। गोलकुण्डासुलतानेषु इब्राहिमकुलीकुतुबशाहो बहु प्रसिद्धो बभूव। मुल्ला वजही तद्विषयेऽलिखत्—

ब्राहीम कुतुबशाह मजलिस सिंगार। किये मुझतइद मोपै इशरत अपार ॥
जितियां खूब खुशशक्स थियां सुन्दरियां। सो करनाटक होर गोर गुजरात कियां॥
जो चीन और माचीन के थे बुतां। तो खुशतबा खुशफहम खुशसूरतां ॥
हर एक खूब महबूब बुत फारसी। बदन ज्यों जलती अछे आरसी ॥

अत्रैतैरुद्धरणैरेतत्प्रयोजनमस्ति यदुत्तरस्य यवनहिन्दीतो दक्षिणस्य यवनहिन्दी आधिक्येन मिश्रभाषास्ति। अस्याम् "अच्छे" सदृशानि प्राचीनहिन्दीक्रियापदान्येव न, 'थी, की' प्रभृतिरूपाणां बहुवचनान्यपि पाञ्चाली( पञ्जाबी )रूपाणि लम्भितानि। वजही-कवेः पूर्वजाः पञ्चनदतो हरियानतो वा दक्षिणं गता इति न ज्ञायते। वजहीकवेर्जन्मतिथि-निश्चयाभावेऽपि तस्य मृत्युकालः त्रिनवत्युत्तरषोडशशततमेशवीयाब्दोऽस्ति।

वजही-गवासी-नसरतीप्रभृतिकवयो दाक्षिणात्य( दकनी)भाषाकवित्वेन प्रसिद्धाः सन्ति, एतेषां कवितासु अमीरखुशरोपश्चाद्वर्तिकविभिरप्रयुक्तानि प्राकृतरूपाण्यपि प्राप्यन्ते।

## हिन्दी नवं नाम उर्दू

हिन्दीभाषायाः रेख्तादकनीनाम्नोर्वर्णनं प्राक्कृतम्। तस्या नवं नाम उर्दू अस्ति। उर्दू-शब्दस्तुरुष्कभाषाशब्दोऽस्ति। तत्र देशे प्रतिवर्षं चत्वारि षडष्ट वाङ्गुलिपरिमिता वृष्टि-र्भवति। अस्मान्मानवाः कृषिं न कुर्वन्ति। वर्षणेन समुद्भूतान् घासादीन् अजावयो भक्ष्यन्ति। अतो लोका गृह-विहीना इवानवरतं वर्षपर्यन्तं पर्यटन्त्येव। तेषां गेहवस्तूनि शकटीष्वारोपितानि तिष्ठन्ति। तेषां मार्गे निवासाः 'उर्त' शब्दाभिहिता भवन्ति। तान्येव महान्ति शिविराणि उर्दू इत्यभिधीयन्ते। अत्रेदं कारणम्—यद् यवनसेनायां तुरुष्काः प्रचुरसंख्यायां प्रवेशं लभन्ते स्म। एशियामध्यभागस्य स्वकीयानुभवैरभ्यासैर्वा ते स्वनिवासान्

'उर्दू' इत्यभिदधुः। मिश्रितां भाषां चोच्चारयामासुः। यतस्ते भारतागमनानन्तरं भारतीयां भाषामेव प्रयुञ्जते, परन्तु तस्यां भाषायां बहून् तुरुष्कशब्दान् प्रयुञ्जते स्म। यथा—सर्वैरेव वैदेशिकैः क्रियते। तेन उर्दूभाषया सह तुरुष्कभाषासम्बन्धो युज्यते। वस्तुतोऽन्यैर्यवनैरुच्चार्यमाणैव भाषा भाषाऽऽसीत्। परन्तु यथारबदेशीया अरबीशब्दानां फारसी-इरानीशब्दानां च स्वभाषायां प्रयोगं कुर्वन्ति स्म। तथैव तुरुष्कास्तुरुष्कशब्दानाम्। परन्तु यवनैः प्रयुज्यमानाया हिन्दीभाषाया नामास्मात्कालात् 'उर्दू' इत्यभवत्। हिन्दूनां यवनानां च भाषायाः कृते क्रियमाणो हिन्दीशब्दव्यवहारोऽधुना केवलं हिन्दूनामेव हिन्दीभाषायाः कृतेऽभूत्। यावनीभाषाया नूतनं नाम 'उर्दू' इत्यजायत।

केचनोभयोरैक्यसम्पादनार्थमेकम् 'हिन्दुस्तानी' इति नामान्तरमकल्पयन्। परन्तु व्यवहार इदं नाम उर्दूभाषाकृते प्रयुज्यते स्म। विपणिव्यवहारादौ तु हिन्दुस्तानीशब्द एवोचितः। परन्तु साहित्यसृष्टेः प्रयासे समारब्ध एषा व्यवस्था किञ्चित्करी जाता। यतो हि सा हिंन्दीलेखकहस्तगता हिन्दीरूपम्, उर्दूलेखकहस्तगता उर्दूरूपं प्राप्यैवातिष्ठत्।

उर्दूभाषायां पारिभाषिकाः शब्दा अरबीतो गृह्यन्ते। हिन्दीपारिभाषिकशब्दाः संस्कृतभाषातश्च। हिन्दीभाषोर्दूभाषयोः लिपिमात्रभेदो नास्ति, पारिभाषिकशब्दभेदोऽप्यस्ति। हिन्दीविदो यद् व्याकरणं वदन्ति उर्दूविदस्तद् 'कवायत' इत्याचक्षन्ते। हिन्द्यां प्रयुज्यमानं रेखागणितमिति नाम उर्दूभाषायाम् "उक्लेदस" इत्याख्यातम्। अन्येषां पारिभाषिकशब्दानां विषयेऽपि एवंविधा मतभेदाः सन्ति। अतः साहित्यक्षेत्र उभयोर्भेदसमाप्तिः कथमपि न संभाव्या। तदर्थं क्रियमाणो यत्नोऽपि व्यर्थ एव। एवमपि व्यावहारिकभाषायां न कश्चिद् भेदोऽस्ति।

एकस्या एव भाषायाः 'हिन्दी, उर्दू' चेति रूपद्वयम्। पुनरपि पूर्वोक्तरीत्योभे पालिप्राकृतान्निर्गते स्तः, अत उभयोर्व्याकरणमेकमेवास्ति। असंशयमेका दैशिकशब्द-प्रचुराऽपरा वैदेशिकशब्दप्रचुरा चास्ति। किन्तूभयोर्भाषास्वरूपं समानमेव। अत एवोभयोः समस्या अपि समाना एव सन्ति। परन्तु लिपिभेदाल्लेखने किञ्चिदन्तरं तच्चानिवार्यमस्ति। अन्यच्च संस्कृतसम्बन्धात् हिन्दीसंश्लेषणात्मिका भाषा ( Synthetical language ) फारसीसम्बन्धाद् उर्दू विश्लेषणात्मिका भाषा (Analytical language)। उभयोर्भाषयोः प्रश्नेषु समस्यासु च विचारारम्भात् पूर्वं भाषयोरेतस्मिन् भेदेऽपि विचारश्चर्चा परमावश्यिकी विद्यते।

आङ्ग्लानभिज्ञा अपरिचितफारसीकाश्च जनाः संश्लिष्टविश्लिष्टशब्दौ स्वस्वलेखेषु प्रयुञ्जाना अपि तयो रहस्यं न विदुः। अतो विस्तरेणेदं प्रकाशनमर्हति।

संश्लेषणात्मिकायां भाषायां संज्ञा-सर्वनाम-विशेषणशब्दानामन्तिमभागे विभक्ति-प्रत्ययाः ( Case terminations or case endings ) भवन्ति। परन्तु विश्लेषणात्मकभाषासु विभक्तिप्रत्ययानां स्थाने (Prepositions) उपसर्गशब्दास्तेषां विकृतरूपाणां

प्राग्भागेन युज्यन्ते। लैटिन-संस्कृत-पालि-प्राकृतेषु च विभक्तिप्रत्यया एव भवन्ति। परन्तु आङ्गल-फारसी-फ्रेंचभाषासु तत्स्थाने (Prepositions) उपसर्गा एव सन्ति। जर्मन-विद्वान् फेड्रिकबॉपमतेन विभक्तिप्रत्ययाः केषाञ्चिदन्येषां शब्दानां घृष्टघृष्टानि रूपाणि सन्ति। वङ्गकमिश्नरो जॉनबम्सिमहोदय एनं सिद्धान्तमाश्रित्य हिन्दीभाषायाः ने, को,से, में विभक्तिः एन-कक्ष-सम-मध्यशब्दैर्विनिर्मिता इत्यवोचत्। साहित्याचार्येण अम्बिकाप्रसाद-व्यासेनापि भाषाप्रभाकरनाम्नि व्याकरणे टिप्पणीलेखैस्तथैवानुमोदितम्। तेषामनुयायिभिः कैश्चिद् हिन्दीमनीषिभिरेतत्सर्वथासिद्धमेवाङ्गीकृतम्। बॉपसाहबविधानाङ्गीकारेण संस्कृतस्य सुब्विभक्तीनामुत्पत्तिरप्येवं मन्तव्या। किन्तु नैवं भवितुमर्हति। एवं चेत्तर्हि लैटिनसदृश्यो भाषा अपि इमामेव कोटिं प्रविष्टा भवेयुः। अत एव भाषाणां विषये पूर्वोक्तो भेद एवोचितः। तदनुसारेण यासु भाषासु विभक्तिप्रत्ययानां स्थाने उपसर्गाः (Prepositions) भवन्ति, ता एव विश्लेषणात्मिका भाषा, नान्या इति निष्कृष्टोऽर्थः।

संस्कृते वचनत्रयम्, परन्तु पालि-प्राकृत-हिन्दीषु वचनद्वयमेव। परन्तु केनचिदेकेन महाशयेन हिन्दीभाषायां द्विवचनाभावाद् 'दम्पती' शब्द एकवचनान्त एवोक्तः। स चायं तेषां भ्रमः प्राकृतप्रकाशस्थेन "द्विवचनस्य बहुवचनम्" इति सूत्रेण दूरीकरणीयः। बीम्स-सम्मतायाः विभक्तिचिह्नानां व्युत्पत्तेरयुक्तत्वप्रदर्शनाय संस्कृत-पालि-प्राकृत-हिन्दीनां सुब्विभक्तिविवरणं प्रकाश्यते—

संस्कृतपालिप्राकृतहिन्दीषु प्रथमादयो विभक्तय एवंक्रमेणैकवचने भवन्ति —

| | | | | | |
|---|---|---|---|---|---|
| | प्रथमा | सु | सि | ओ | .... |
| | द्वितीया | अम् | अं | अं | को |
| | तृतीया | टा | ना | णा | ने |
| | चतुर्थी | ङे | स | स्स | ... |
| | पंचमी | ङसि | स्मा | आ, दो, | हु हि से |
| | षष्ठी | ङस् | स | स्स | .... |
| | सप्तमी | ङि | स्मि | ए, म्मि | मे |
| अनेकवचने च | प्रथमा | जस् | आं | आ | .... |
| | द्वितीया | शस् | यो | आ | ओंको |
| | तृतीया | भिस् | हि | हि | ओंने |
| | चतुर्थी | भ्यस् | नं | ण, णं, आके | ओंको |
| | पंचमी | भ्यस् | हि | हिन्तो सुन्तो | ओंसे |
| | षष्ठी | आम् | नं | ण, णं आकं | .... |
| | सप्तमी | सुप् | सु | सुं सु | आंमे |

उपर्युक्तेनानेन विवरणेनायमभिप्रायो व्यक्तीक्रियते यद् हिन्दीभाषाया विभक्ति-प्रत्ययाः केषाञ्चित् स्वतन्त्रशब्दानां विकृतरूपाणि न सन्ति, किन्तु ते पालि-प्राकृतरूपैर्निर्मिताः सन्ति। सप्तमीविभक्तेः 'में' रूपं मध्यशब्दान्नाविर्भूतम्, किन्तु प्राकृतस्य 'म्मि' विभक्ति-

विनिर्मितमस्ति। एवमन्यदपि बोध्यम्। तथा सति बीम्सकृता व्युत्पत्तिः क्लिष्टकल्पनैव। उपर्य्युक्तविवरणेऽङ्किता बिन्दवो विभक्तीनामभावप्रदर्शनार्थं सन्ति। प्राकृते चतुर्थ्या अभावे सति चण्डकविः स्वप्राकृतलक्षणनामके व्याकरणे 'षष्ठीवच्चतुर्थी' इति सूत्रं चकार। तेन षष्ठी रूपमेव चतुर्थीस्थाने प्रयुज्यत इत्यवगम्यते। कालेऽतिक्रान्ते सति सर्वासु वर्तमानार्यभाषासु षष्ठ्या अभाव एवाभूत्। तत्कार्यं तद्धितप्रत्ययैः कृतमासीत्। अत एव हिन्द्यां यत्र 'का, की, के' प्रत्ययाः प्रयुज्यन्ते, तत्र सिन्धुदेशीयायाम् 'जो, जी, जे' पञ्चनदीयायाम् 'दा, दी, दे' गुर्जरीयभाषायाम् 'नो, नी, ने' माहाराष्ट्र्याम् 'चा, ची, चे' प्रत्ययाः प्रयुक्ता भवन्ति। हिन्दीसर्वनामसु 'रा, री, रे, ना, नी, ने, या, यी, ये' च प्रत्ययाः प्रयुज्यन्ते। अत-एवैतेषाम् 'अपना, अपनी, अपने, हमारा, हमारी, हमारे' इत्यादीन्युदाहरणान्युच्यन्ते।

चण्डकवेः 'षष्ठीवच्चतुर्थी' इति सूत्रस्य सत्त्वेन प्राकृते वर्तमानाया 'आकं' विभक्तेरेव 'को' प्राचीनहिन्द्याः 'कहं, क, कां' इति रूपाणि भवन्ति। अतो द्वितीयाचतुर्थीत्युभाभ्यां 'को' चिह्नं प्रयुज्यते। प्राकृते संस्कृतमिव 'नमः' शब्दयोगे चतुर्थी न जायते, किन्तु द्वितीयै-वेति "ओं नमः सिद्धम्" इति प्रयोगेण स्पष्टं लक्ष्यते।

अत्रेदं विचार्यते—'म्मि,तो मे'विभक्तेरुत्पत्तिरथवा मध्यशब्दात्। प्राकृते 'अह्म, घर, तुम' इत्यादिषु 'म्म'विभक्तियोगेन 'अह्मिम्मि, घरम्मि, तुमम्मि' इत्यादिरूपाणि भवन्ति। 'से, सुन्तो' चिह्नाज्जातम्, न तु समात्। तस्मादेव सूं, सों, से, सेतीप्रभृतीनि चिह्नानि जायन्ते। सुन्तो इत्यनेन सहैव 'पञ्चम्याश्चिह्न हिन्तो' इत्यपि वर्तते। एतच्चिह्नानि प्राचीनभाषायां प्राप्यन्ते = केतीक दूर अजमेर हूँत' = 'अजमेरात् कियद् दूरम्' इत्यर्थकं रासोकाव्ये लिखितम्। तुलसीदासोऽपि 'हिन्तो' इत्यस्माज्जातम् 'हुति' इति प्रायुंक्त। यथा—"सासु ससुर सन मोरि हुति, करिय विनय परि पाँय" मम पक्षतो मम वचनाद् वेत्यर्थो बुध्यते। वङ्गभाषायाः 'हइते' (होइते) तथा महाराष्ट्र्याः 'हून' विभक्तेश्चो-त्पत्तिरस्मादेव हिन्तोरभूदिति प्रतीयते।

एतस्मिन् प्रसङ्ग इदमपि वक्तुमुचितं यद् बहुवचनविभक्तिभ्यः प्राग् वर्तमानं 'ओं' इत्यपि प्राचीनहिन्द्याः 'न्ह', न वास्ति। "बात अस लरिकन्ह कही" इत्यतः स्पष्टं भवति। 'ओं' इत्यस्य न, न्हेति रूपपरिवृत्तिविचारः प्राकृतसूत्रेषु प्रकटीकृत इति विस्तरभयान्नोच्यते। यदि हिन्द्या विभक्तिप्रत्ययाः पदानामेवाङ्गानीति चेत्ते संयुक्ता एव लेख्याः, न तु पृथक्। 'लड़कपन'शब्दे पन, इति भावार्थकः प्रत्ययोऽस्ति, तथापि स संयोज्यैव लिख्यते, न तु पृथक्। एवं 'लड़कों का, लड़कों ने, से' इत्यादिष्वपि ज्ञातव्यम्। 'जाऊँगा, आवेगा' इत्यादिभविष्यत्कालिकक्रियापदेषु 'जाऊँ, आवे' इत्यादितो गाप्रभृतीनि चिह्नानि पृथग् लिख्यन्ते, नो चेत् किमौचित्यं विभक्तिप्रत्ययानां पृथग् लेखस्य।

अत्रेदं वक्तुं शक्यते यत् क्रियापदानि संयोज्यैव लेख्यानीति। अत्रोत्तरं यद् हिन्द्यां संस्कृतस्येव तिङन्तक्रियापदानि स्वल्पतराण्येव सन्ति। अतः कृदन्तानां साहाय्येन

क्रियापदानि निर्माय प्रयुज्यन्ते। "मैं जाता हूँ" इत्यस्मिन् वाक्ये 'जा'धातुना 'ता'-प्रत्ययं संयोज्य 'जाता' इति रूपम्, पुनः 'ह'क्रियया 'हूँ' इति निष्पन्नम्, तेन 'जाता हूँ' इत्यनयोरसंयुक्तो लेख एवोचितः।

संस्कृते सुबन्त-तिङन्त-कृदन्त-णिजन्तपदानि सन्ति। परन्तु हिन्दीभाषायां तिङन्तानां प्रायेणाभाव एव वरीवर्ति। अतः कृदन्तानां संयोगेन क्रियापदानि निष्पद्यन्ते। प्राक्कालिकहिन्द्यां 'जावै है, आवै है' सदृशानि क्रियापदानि प्रचलितान्यासन्। कस्यचिन्मनीषिणो मतेन तान्येव प्रयोज्यानि। तथा सति हिन्दीक्रियापदेभ्यो लिङ्गभेदोऽपि समाप्तो भवति। अत्रेदं वक्तव्यं यत्ते प्रयोगा वर्तमानकालायैवोपयुक्ताः, न तु भूतभविष्यत्कालाभ्याम्। यतो हि भूतकालिकक्रियायां 'जावै था, जावै थी' इति प्रयुज्यते, भविष्यत्कालिकक्रियायां 'जावै गा, जावै गी' इति प्रयुज्यते। एवं स्थिते "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति न्यायश्चरितार्थो भविष्यति।

अन्यच्च दाक्षिणात्यहिन्द्यामपि कृदन्तशब्दैः क्रियापदानि निर्मितानि सन्ति। अतस्तेभ्यो मुक्तिरसम्भवैव। तृतीयः प्रबलतमस्तर्कोऽयं बाधको जायते, यथा—कुम्भकारोऽस्मद् वचनाद् घटान् अन्यानि भाण्डानि च न रचयति, तथा विद्वानपि भाषां रचयितुं न प्रभवति।

लोका विदुषो मित्रस्यादेशमनुसरन्तो लेखं वादं वा करिष्यन्तीत्यसंशयं सुखस्वप्नायितम्। एतदवधि केवलं हिन्द्याः प्रश्नोत्तरविमर्शोऽभूत्। यद्यप्यन्तिमः प्रश्नो यावान् हिन्दीभाषया सह सम्बद्धस्तावानेव उर्दूभाषयाऽपि।

अन्त इदमपि वक्तुमयुक्तं न भवेद् यत् कृदन्तैः क्रियापदरचनाऽत आवश्यिका जाता यन्न केवलं 'मैं, तू' इति सर्वनामशब्दयोरन्येषु सर्वनामशब्देषु विभिन्नलिङ्गाः शब्दा न वर्तन्ते। एतस्यामवस्थायां क्रियापदेषु लिङ्गभेदाभावाद् भाषायां महानुपप्लवो भवेत्। संस्कृत-पालि-प्राकृत-अरबीभाषासु भिन्नलिङ्गेषु भिन्नलिङ्गशब्दानां सत्त्वेन क्रियापदेषु लिङ्गभेदोऽनावश्यक आसीत्।

सर्वत्र गद्यरचनाया प्राक् पद्यरचना जायते। ऋग्वेदः पद्यमयः, यजुर्वेदो गद्यमयः। उर्दूभाषायामपि पूर्वं पद्यं ( नज्म ), पश्चात् गद्यं ( नस्र ) रचितम्। हिन्दीभाषायाः खड़ीबोलीसाहित्याद् उर्दूसाहित्यं शतान्यब्दानि प्राचीनतरम्। एषां शब्दरूपाणां कृते उर्दूसाहित्यमेवास्माभिः पूर्वं द्रष्टव्यम्। व्याकरणेषु 'यह, वह' सर्वनामशब्दबहुवचनरूपे 'ये, वे' इति दृश्येते। पूर्वमुर्दूभाषायामपि तत्प्रयोगो भवति स्म। परन्त्वधुना व्याकरणग्रन्थेष्वेव तद्दर्शनं जायते। पूर्वमुर्दूभाषायां तत्प्रयोगो जायते स्म, नात्र कश्चित् सन्देहस्तल्लेखप्रमाणाय स्थितिरेका उद्ध्रियते—

फिरते थे दश्त दश्त दिवाने किधर गये।
वे आशिकी के हाय जमाने किधर गये॥

परन्तु सम्प्रति उर्दूभाषायामेव न, हिन्दीभाषायामपि 'ये, वे' इत्यनयोः स्थाने 'यह, वह' शब्दावेव प्रचलितौ। किन्तु व्याकरणकर्तारो न तस्याशुद्धिं निर्दिशन्ति, न च नियमेषु संशोधनमेव कुर्वन्ति। 'यह, वह, जो' इत्यादिसर्वनामशब्दानां बहुवचन-रूपेषु तृतीयाबहुवचनानि विहाय सर्वत्र 'इन, उन, जिन' Oblique cases इत्यादिषु सामान्यरूपाण्येव प्रयुक्तानि दृश्यन्ते। केवलम् 'इन्हों, उन्हों, जिन्हों' इति सामान्यरूपाणां प्रयोगस्तृतीयायां दृश्यते। गुर्जरीय-महाराष्ट्री-राजस्थानीयलेखकैर्लिखितम् 'जिन्हों से, उन्हों को, इन्हों को' इत्याद्युपहसनीयतां गच्छति। परन्तु प्राचीन( शायरी )कवितासु ते शब्दाः प्रयुक्ता दृश्यन्ते। अधस्तनान्युदाहरणानि पश्यत—'जिन्होंने' इत्यस्य स्थाने 'जिनने' इति प्रयुक्तम्—

जिनने देखे तेरे लबे शीरी।
नहीं निगाह उनकी शकर की तरफ॥

एवं 'जिनकी' इत्यस्य स्थाने 'जिन्हों की' इति प्रयुक्तम्—

अँगूठी लाल की करती कयामत आज जो होती।
जिन्हों की आन पहुँची लड़ मुए वह एक छल्ले पर॥
अब्रुए यार का है सिरमे जिन्हों के सौदा।
सूक वह लोग किया करते हैं तलवारों पर॥

हिन्दीभाषाभाषिणां नार्योऽपि उर्दूभाषिण्य इवैकवचनप्रयोग आत्मनः कृते स्त्रीलिङ्गक्रियापदं प्रयुञ्जते, परन्तु बहुवचने पुल्लिङ्गक्रियापदं प्रयुञ्जते। अयं फारसी-भाषाप्रभावो हिन्दीभाषाम् उर्दूद्वारेण प्रविष्टः। उर्दूवक्तारः 'इसकी वजह क्या है' इति वदन्ति, तदा 'वजह'शब्दः स्त्रीलिंग एकवचनान्तो भवति। "इसके वजूह क्या हैं" इति वाक्ये 'वजूह'शब्दः पुल्लिङ्गो बहुवचनान्तो भवति। एवमेव "वे कहती हैं, मैं आती हूँ" इति बहुवचने 'हम आते हैं'। पश्चिम प्रान्तेषु 'है' इत्यस्य स्थाने 'हैगा' इति, 'था' इत्यस्य कृते 'थागा' इति वदन्ति। यद्यपि ते शब्दाः शिष्टानां लेखकानां लेखनीतो न प्रसूताः, तथापि तेषामस्तित्वे नास्ति संशयः। कोपेऽप्येषा वाणी दृश्यते, दिल्लीस्थस्य मिष्टान्नविक्रेतुः—

कोई कहे इधर को आवो, देखो चीज का खासी।
ताजी हो तो हैंगी याँपर और वाँपर है बासी॥

उपर्युक्तेऽवतरणे 'इधरको' इत्यस्मिन् 'को' इत्येतद् द्वितीयपंक्तौ याँपर-वाँपर इत्यनयोर्द्वयोः 'पर' इत्येतदधिकपदे स्तः।

प्राचीन( शायरी )कवित्वे तादृशानामधिकशब्दानां प्रयोगः प्राचुर्येण जायते स्म, यथा—

शाकी पिला दे मय मुझे मसजिद में बैठ कर।
या वह जगह बता कि जहाँ पर खुदा न हो॥

इत्यत्रोदाहरणे द्वितीयपंक्तौ 'कि' इति 'जहाँ पर' इत्यत्र 'पर' इत्यधिकं पदं वर्तते। 'जहाँ' इति क्रियाविशेषणेनैव गतार्थत्वात् 'पर' इति पदं व्यर्थमेव।

निमित्तापरपर्यायं 'लिये' इत्यव्ययपदं मामकीनहिन्द्यां प्रचुरप्रचालम्। तस्मिन्नेवार्थे पश्चिमप्रान्तेषु 'लैं' इति प्रयुज्यते। रामचरितमानसेऽनेकस्थलेष्वस्मिन्नर्थे 'लगि' इत्यस्य प्रयोगो दृश्यते। पाटलिपुत्रे (पटना) सततिवर्षाणि प्राग् निमित्तार्थे 'लगि' 'लाग' 'ला' इत्येषां प्रयोगः श्रूयते स्म। किन्तु सम्प्रति तत्प्रयोगो न्यूनतामगात्, न तु सर्वथा समाप्तः। ते शब्दाः प्रायः शतत्रयवर्षाणि प्राक् पश्चिमतः प्रचलिताः पाटलिपुत्रपर्यन्तमेव न मुर्शिदाबादपर्यन्तमपि प्रचेलुः। प्राकृतस्य 'लगि' इत्यस्मात्तदुत्पत्तौ न कस्यचिद् विमतिर्भवेत्। परन्तु लेखने शुद्धीकरणाय कतिपये धीरा 'ला' धातोर्भूतकालिकबहुवचनादेतस्य भेदप्रदर्शनाय 'लिये' इत्येतल्लिखितुमारब्धाः, किन्तु भाषायामेतदसम्भवम्। संस्कृते हरिशब्दो विष्णुसूर्यवानरार्थेषु प्रयुज्यमानो भवति। परन्तु किमस्माभिः त्रिष्वर्थेषु पृथक् पृथग् वर्तनी विधीयते। नो चेत् किमस्यौचित्यम्? तादृशः Dear इत्ययमाङ्गलशब्दो महर्घे प्रिये चार्थे प्रयुज्यमानो भवति। न च तस्य वर्तन्यां (वर्णक्रमे) कश्चिद् भेदो जायते। अतोऽयमव्यापारेषु व्यापार एव भवितुमर्हति। 'इ ई' इत्यनयोरनन्तरं यकारः स्वयमेवोपस्थापयति। संस्कृते सुधीशब्दस्य द्विवचने 'सुधियौ' भवति, न तु सुधीऔ इति, यद्यपि पूर्वोक्तरीत्या 'सुधीऔ' इत्येवोचितम्। अतो 'लिए' इत्यस्य स्थाने 'लिये' इति लेखनमेवोचितः। प्राचीनेषु उर्दू पुस्तकेषु 'किस्सा गुलबकावली' इत्यादिषु 'क्या किया चाहिये' इति वाक्यं लिखितं दृश्यते, परन्त्वधुना उर्दू हिन्दीभाषयोस्तदर्थे 'क्या करना चाहिये' इति लिख्यते। कालभेदात् प्रयोगभेदो नैसर्गिक एवेति न तेष्वशुद्धिशङ्काऽवसरः।

निर्जीवसंज्ञाशब्दानां स्वल्पतरा लिङ्गचर्चा विधीयते। हिन्दीभाषाया लिङ्गानुशासनं तस्या दोषरूपमेव। वस्तुतो हिन्दीभाषायां लिङ्गद्वयमेवास्ति। तेन कश्चित् कश्चित् पुल्लिङ्गमाह, कश्चित् स्त्रीलिङ्गम्। विस्तृतक्षेत्रे व्यवह्रियमाणायां हिन्द्यामेतदपरिहार्यमेव। हिन्दीभाषायां 'भोर'शब्दः पश्चिमप्रान्तेषु स्त्रीलिङ्गः, लक्ष्मणपुरे पुल्लिङ्ग उच्यते। अमीरखुसरोऽलिखत्— "सारी रैन मोहि संग जागा। भोर भई तब बिछुरन लागा॥" अत्र 'भोर' शब्दः स्त्रीलिङ्गः। परन्तु तुलसीदासेनालेखि—'जागिये कृपानिधान भोर भयो प्यारे।' अत्र भोरशब्दः पुल्लिङ्गः। एवमेव गेंद(कन्दुक)शब्दोऽपि क्वचिद् व्रजादौ स्त्रीलिङ्गः क्वचिदवधमण्डले च पुल्लिङ्ग एवोच्यते। तत्र सर्वत्रैव लिङ्गव्यत्ययं विलोक्य नोद्वेगः कर्तव्यः। वेदेषु वर्तमानो लिङ्गव्यत्ययोऽस्माभिस्तत एव रिक्थरूपेणोपलब्धः।

निर्जीवसंज्ञाशब्दानां लिङ्गनिर्णयविषय एव दिल्लीलक्ष्मणपुर्योर्भेदो नास्ति, प्रत्युत प्रयोगेष्वपि भेदो वर्तते। दिल्लीस्थाः "कारवाई करनी होगी" इति ब्रुवते, लक्ष्मणपुरीयाः "कारवाई करना होगी" इति ब्रुवते। व्याकरणानुयायिनः पूर्ववाक्यं शुद्धम्, परवाक्यमशुद्धमिति वक्ष्यन्ति, तन्न विचारसहम्; एकेन द्वाभ्यां वा प्रयुज्यमानमशुद्धमिति कथनं

सम्भवम्, किन्तु समाजेनैव व्यवहृतां भाषामशुद्धिग्रस्तां वक्तुं कः क्षमेत। साहित्यिकै-रसमर्थितं तद् वचस्तु दुःसाहससीमामत्येति।

अत्रेत्थं तर्कयितुं शक्यते यत् पूर्वीयमण्डलेषु विहारप्रान्ते च लोकैर्लिखितानि 'हम कहे, हम किये' सदृशानि वाक्यानि कुतोऽशुद्धानि नो मन्यते। तत्रेदमुत्तरं बोध्यम्—येषां क्षेत्राणां भाषासु कर्मवाच्योऽर्थः कर्मणि प्रयोगो वा नास्ति, तत्रैतानि वाक्यानि शुद्धानि सन्त्येव। परन्तु यत्र कर्मणि प्रयोगसत्ता स्वीकृता तत्रैव तानि शुद्धिरहितानि सन्ति। कर्मणि प्रयोग-शासनं पञ्चालादारभ्य वङ्गविहारसीमां यावद् वर्तते। अतो वयं तान् प्रयोगानुपहसामोऽ-शुद्धांश्चाभिदध्मः। यदि ग्रियर्सनमहाशयस्येच्छानुरूपं विहारप्रान्ते हिन्दीं विहाय काचिदन्या विहारप्रान्तीया भाषा स्याच्चेत्तर्हि न कस्यापि हास्यावसरः स्यात्।

यथोच्चवर्णेषु हिन्दुषु सपत्नी माता तु भवति, न तु समानः पिता। परन्तु पुनर्विवाह-प्रथायुक्तेषु समाजेषु समानः पिताऽपि भवति। उच्चवर्णेषु हिन्दुषु "किमसौ महाशयो भवतः स पिताऽस्ति" इति केनचिद् पृष्टो जनस्तं ताडयितुं प्रहर्तुं वा प्रवृत्तः स्यात्, परन्तु यत्र तादृशः पिता भवति तत्रेदं वचनं न कश्चिदप्रियं मनुते, न च प्रहर्तुकामो भवति। कलिकातास्थ उच्चन्यायालये कश्चिन्महाशयोऽन्यस्मिञ्जने मानहानिकरणाभियोगं कृतवान्, यत्स तं 'श्यालम्' कथितवान्। आङ्गलजातीयेन न्यायाधीशेन प्राकृतसम्बन्धाद् नेदं वचनं मानहानिकर-मित्युक्त्वाऽभियोगः समापितः। हिन्दूप्राड्विवाकः स्ववचने खण्डिते सति "योर लार्डशिप् इज् माई साला" ( your lordship is my sala ) इत्युक्त्वा ततः प्रस्थितः।

## हिन्दीभाषायामन्यभाषाप्रभावः

हिन्द्यामरवी-फारसी-तुर्की-पोर्चुगीजाङ्गलाद्यूरोपीयभाषाणामेव न, भारतीयभाषाणा-मपि प्रभावो वरीवर्ति। यत्र द्वयोर्भाषयोः परस्परं सीमासम्बन्धो भवति तत्रान्योन्यमादान-प्रदाने भवत एव। यत्र प्रतिवेशिनोऽथवा दूरदेशीयभाषाभाषिणो जना निवसन्ति, तत्र स्थानीयभाषायाः शब्दान् भावान् वाक्यांशान् वा स्वकीभाषायां ते प्रयुञ्जते। पुनस्ते सर्वे तद्भाषाया अङ्गानि जायन्ते। हिन्द्याः सीमा पश्चिमोत्तरे पाञ्चाली सैन्धवी ( सिन्धी ) पूर्वे वङ्गभाषायामुपलभ्यते, अतो मयाऽत्रैवावधानं कर्तव्यम्।

पाञ्चालीभाषा केवलं कथनायैव पाञ्चाली; किन्तु तत्र उर्दू हिन्द्यावेव मुख्ये-भाषे स्तः। प्राक्काले यदा तत्रत्या जनाः पाञ्चालीं वदन्ति स्म, तथापि तैः सर्वे व्यापारा उर्दूभाषयैवाकारिषत। परन्तु सरस्वतीत्युपाधिभाजा स्वामिना दयानन्देन वैदिकाभ्युत्था-नान्दोलने प्रचालिते वेदानुयायिनोऽपि हिन्दीमग्रेसरां व्यदधुः। पाकिस्ताननिर्माणेन उर्दू-भाषायास्तन्महत्त्वं क्षीणमभवत्। प्रशिष्याः ( सिक्खाः ) प्रबुद्धाः सन्तो पाञ्चाल्याः पक्ष-पातिनोऽभवन्। पूर्वं ते पाञ्चालीमपि उर्दूलिप्यामेवालिखन्। सम्प्रति ते गुरुमुखीलिपिं स्वपथलिपिं मन्यन्ते।

यथा तथा वा भवेत् । सम्प्रति पाञ्चाल्या हिन्दी कियत्प्रभाविताऽस्तीति द्रष्टव्यमस्ति । पाञ्चालैर्जनैस्तत्र तिष्ठद्भिरेव न, तस्माद् बहिस्स्थितैरपि ( कलिकातास्थैः ) हिन्दी-सेवा विहितास्ति । कलिकातायां भारतमित्रम्, सारसुधानिधिः, उचितवक्तेत्यादिपत्राणां जन्मदातारो जम्बूपाञ्चालाभिजनाः सारस्वता ब्राह्मणा एवासन् । पाञ्चाल्यां प्रचलिताः "मैने जाना है" इत्यादयः प्रयोगाः "मया गन्तव्यम्" इत्यादिसंस्कृतवाक्यैः समर्थिता अपि भवन्ति । हिन्द्यां 'मुझे जाना है' एवंविधाः प्रयोगाः प्रचलिताः सन्ति । पाञ्चाललेखकाः स्वयं तु "मैंने जाना है' इति लिखन्तोऽपि 'मुझे जाना है' इति लेखकानां न त्वालोचनां कृतवन्तः, न च स्वयमीदृशं वाक्यं चालिखन् । पक्षान्तरादपि न काप्यालोचना प्रावर्तत । अद्यापि सैवावस्था विद्यते । परन्तु दिल्लीमधितिष्ठन्नुत्तरप्रदेशीया जना अपि पाञ्चाली-प्रयोगमनुकुर्वन्तो विलोक्यन्ते ।

पाञ्चाल्यामीकारान्ताः शब्दा बहुवचने 'याँ' प्रत्यययोगेन निष्पाद्यन्ते । सय्यद इन्सा अल्ला खाँ महाशयेन 'ठेठ हिन्दी की कहानी' इति पुस्तके "आतियाँ जातियाँ हैं" इत्यलेखि । अधुना 'आती जाती हैं' इत्येव लिख्यते । उदन्तमार्तण्डं नाम पत्रं षड्विंशाधिकाष्टादशशतम ईशवीयाब्दे कलिकातातः प्रकाशितम् । तस्य सम्पादकः पाञ्चालोऽसन्नपि कर्णपुरवास्तव्यो भूत्वाऽप्येकस्मिन् स्थाने "तोपें दगियाँ' इत्यलिखत्, न तु 'तोपें दगीं' इति । एतेन हिन्दीगद्यस्यातिकाले एतादृशाः प्रयोगाः शुद्धा एव मता अभूवन्निति प्रतीयते, किन्त्वधुना न ते कुत्रापि दृश्यन्ते ।

तथाप्येकः पञ्चनदीयः प्रयोगो हिन्द्यां प्रचुरप्रचारोऽस्ति—"मुझे क्यों बुलाया गया" इति । प्राचीनभाषायां 'मैं क्यों बुलाया गया' इत्येवालिख्यते । एकं प्राचीनं शेर-नामकं पद्यमस्ति—

यहाँ कौन खुदा के लिये लाया मुझको ।
किस सितमगर ने सोते से जगाया मुझको ॥

हिन्दीलेखकाः प्रायः पाञ्चालीसम्पर्कं नाधिगताः । पाञ्चाले हिन्दीलेखकास्ते तन्निवासिन आसन् । परन्तु हिन्द्यां वङ्गप्रभावः प्राचुर्येणासीत्, अद्यापि चास्ति । बहूनां वङ्गोपन्यासानां भाषान्तराण्यद्यतः पञ्चषष्ठिवर्षाणि प्राग् जातानि । तदानीन्तनानां भाषान्तरकारिणां वङ्गहिन्दीभाषयोर्ज्ञानमपुष्कलमासीत्, अतस्तैरपरिचितानां शब्दानां स्थाने वङ्गशब्दा एव प्रयुक्ता अभूवन् । अतः कतिपये वङ्गप्रयोगा हिन्द्यां तद्वदेवोपलब्धा भवन्ति । संशोधनकार्यमेकस्या द्वयोर्वा भाषयोर्ज्ञानेन सम्यग् न सम्पद्यते, तदर्थं बहुभाषज्ञेन भवितव्यम् । किञ्चित् कालात् प्राक् 'इधर, उधर' इत्यनयोरव्यययोः कुतः समुपलब्धिरिति गवेषणमारब्धम् । तैलङ्गालयोरिव तयोस्तत्रान्वेषणं कृतं यत्र तदुपलब्धेरसम्भवः । वस्तुतस्त्वेतौ वङ्गीययोः 'एधार, ओधार' शब्दयो रूपान्तरमासादितवन्तौ । वङ्गभाषा महाराष्ट्री—हिन्दीतो दूरतरं वर्तेते । परन्तु काशी महाराष्ट्रीभाषिणामुपनिवेश उच्यते । द्वितीयस्य

पेशवाख्यस्य बाजीरावस्य कर्णपुरमण्डलान्तर्गतब्रह्मावर्त( विठूर )वासाद् हिन्दीमहाराष्ट्रीभाषिणां सम्बन्धे दृढतां गतेऽन्योन्यभाषा शब्दा अपीतस्ततो जाताः। हिन्द्याम् 'ऋ' इति वर्णः प्रायेण 'रि' इति लिख्यते। परन्तु महाराष्ट्रगुर्जरीयोत्कलभाषासु तद्रूपं 'रु' इति जायते। इह भ्रातृशब्दस्थाने 'भाई' इति, परन्तु महाराष्ट्र्यां 'भाऊ, भाउ' वा भवति। भ्रातृजायास्थाने 'भाई जाई' इत्यनेन भवितव्यम्, परन्तु हिन्द्यां 'भाउ जाई' अथवा 'भौजाई' इत्यनेन भूयते। अयं 'भाउ' शब्दो महाराष्ट्रीयोऽस्ति। एवं मातृष्वसा 'माउसी, मौसी' वेति रूपान्तरं प्राप्नोति। केचन 'मासी' इत्यपि वदन्ति, माई-सीति न। परन्तु 'मासी' इति मातृसदृशार्थकः, न तु मातृष्वस्रर्थकः। एवं महाराष्ट्र्या हिन्दी प्रभावितेति बोध्यम्।

एकस्या भाषायाः शब्दा नानाविधैः कारणैर्भाषान्तरं प्रविष्टाः प्रचालं प्राप्नुवन्ति। ममायं बुद्धशब्दः अरबी-फारसीत्यादियावनीषु भाषासु बुतार्थे प्रतिमार्थे वा प्रयुज्यते। परन्तु तेषां भाषाशब्दा मम भाषायां नागता इति कश्चिन्मनीषी तु वक्तुं नोत्सहते। पिक-नेम-तामरस-शब्दाः संस्कृतशब्दा एव प्रतीयन्ते, परन्तु तन्त्रवार्तिके त्रयोविंशपृष्ठे तान् म्लेच्छभाषाशब्दानाह। अर्धपर्यायो नेमशब्दस्तु फारसीस्थो नीमशब्द एव ज्ञायते सर्वैः। पिक-तामरस-शब्दौ कुतस्त्याविति ज्ञाने काठिन्यं प्रतिभाति।

तमिल-तेलगु-मलयालमभाषा द्राविणभाषासु गण्यन्ते। वेदभाष्यकर्ता यः सायणाचार्यो वर्तते, स दक्षिणभारते विजयनगरसाम्राज्य आसीत्। समस्ते भारते लब्धप्रचारोऽपि सायणशब्दः कस्या भाषायाः शब्दः किमर्थकश्चेति जानाति विरलो जनः। चावलशब्दः किम्भाषीय इति कोषकर्तारोऽपि न विदुः, किं पुनरन्ये। द्राविणभाषासु ओदनार्थे प्रचलिताच्चोरशब्दादेव 'चाउर, चाउल, चावल' इति क्रमशो विनिर्मिताः।

सर्वमिदं प्राचीनम्। अधुनैव मण्डपार्थे 'पण्डाल'शब्दः प्रचारमलभत। मद्रप्रान्ते जायमाने प्रथमे कांग्रेसमहाधिवेशने सर्वप्रथमम् उत्तरभारतीयैर्मण्डपार्थे पण्डालशब्दप्रयोगो दृष्टः। पुनः स उत्तरभारते प्रचलितः। अयं पण्डालशब्दो द्राविडतमिलभाषाशब्दो विद्यते।

अन्यच्च पोर्चुगीजभाषाशब्दा द्राविडशब्देभ्योऽनेकगुणाधिका हिन्द्यामेव न, सर्वासु भारतीयभाषासु प्रचलिताः सन्ति। तान् शब्दान् स्वल्पतरा एव विदुः, अन्यच्च तेषां सम्बन्धपरित्यागोऽप्यसम्भव एव।

हिन्दीभाषाया उत्पत्तिविकासयोरिदं संक्षिप्तं विवरणमितिहासे भाषाशास्त्रे च निकषे निघर्षणेन परीक्षणीयम् सारभूतं चोपासनीयं बुधैरित्यलम्।



# 'भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः'

श्रीहिन्दकेशरी शास्त्री,

अनुसन्धाता, वा० सं० वि० वि०

धात्वर्थं पृष्टो वैयाकरणः शुकवद्ब्रूते—'फलव्यापारनिष्ठवाच्यतानिरूपितवाचकतावान् धातुः' इति। निशम्येमां वैखरीं चिन्तयामि किं बद्धमूलोऽयं विचारः, भट्टोजिदीक्षितैः स्वीकृतो धात्वर्थः किं हर्यादीनामपि सम्मतः परमसिद्धान्तः फलव्यापारयोर्धातुरिति।

अत्र निबन्धे भाष्यकारादिभिः प्रतिपादितो हर्यादिभिश्चानुमोदितः को धात्वर्थं इति विचारयामः। अस्या विचारणायाः प्रवृत्तिनिमित्तं हरेः 'भाव एव हि धात्वर्थ इत्यविछिन्न आगमः' इति कारिका। अत्र कारिकायाम् आगमप्रामाण्यवादी आचार्यो भर्तृहरिः केवलं भावमेव धात्वर्थमाह। एवञ्चायमर्थः सम्भवति, न वेति विचार्यते।

'फलव्यापारयोर्धातुः' इत्यत्र व्यापारो धात्वर्थः, अत्र न कापि विप्रतिपत्तिः, केवलं फलांशे विवादः, व्यापारस्तु भावविकार एव। अत्र तावत् प्रसङ्गप्राप्तः फलशब्दार्थो विचार्यते—वैयाकरणसम्प्रदाये हि पूर्वं फलशब्दं भगवान् पाणिनिः "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (१।३।७२) इति सूत्रे सस्मार। इदं फलं हि तत्तत्क्रियाणां ग्रामप्राप्तिरूपं भोजनादिरूपकम्, न तु फलव्यापारयोरित्यत्राभिमतसंयोगविभागविक्लित्त्यादिरूपम्। अस्य सूत्रस्य भाष्यमनुसृत्येवाचार्यो हरिः—

> यस्यार्थस्य प्रसिध्यर्थमारभन्ते पचादयः।
> तत् प्रधानं फलं तेषां न लाभादि प्रयोजनम्॥[2]

इति वैयाकरणसम्प्रदायसम्मतं फलमाह। भट्टोजिदीक्षिता अपि शब्दकौस्तुभे[3] कर्मपर्यायं फलशब्दं व्यवजह्रुः। यद्यपि ते विक्लित्त्यादिकमपि फलं प्राहुरित्यन्यदेतत्। अत्रेदमेव वक्तव्यं यत् पूर्वाचार्याणां सम्मतं फलं कर्तुः क्रिययाप्तुमिष्टतममेव, तत् कुत्रचिद् ग्रामादि कुत्रचिच्च स्वर्गादि। इतोऽन्यत् 'अन्येच्छानधीनेच्छाविषयत्वमथवा धातुवाच्यत्वे सति धातुवाच्यव्यापारजन्यत्वम्' एवंविधो यो विलक्षणः फलपदार्थः स न कुत्रापि भाष्यादौ वाक्यपदीये वा नयनश्रवणयोर्विषयतां गतः। एवं हि आपाणिनेर्न्यासकारपर्यन्तं निष्फलमेव धात्वर्थमवलोकयामः। कैयटग्रन्थेऽपि फलचर्चा नास्त्येव। वैयाकरणसम्प्रदाये त्वियं फलश्रुति-

---

१. वाक्यपदीये क्रियासमुद्देशः २३।

२. ,, उपग्रहसमुद्देशः १८।

३. शब्दकौस्तुभः, भूवादिसूत्रे 'फलमेव त्विष्टतमम्, तच्च धातुनोपात्तमिति तद्विशिष्टत्वेन इच्छाविषयोऽत्र संज्ञी, स च त्रिविधः, उक्तञ्च निर्वर्त्यञ्चेत्यादि।

मीमांसकेभ्यः प्राप्ता, तत्र पूर्वं हरदत्तग्रन्थे धातोः फलमर्थं शृणुमः। विस्तरस्तु दीक्षितग्रन्थेषु तेषां शिष्यादीनां ग्रन्थेषु च। एतेषां हि फलवाचकत्वसाधिका इमा युक्तयः—

१—सकर्मकत्वोच्छेदापत्तिः।

२—'क्रियते घटः स्वयमेव' इति प्रयोगो न स्यात्।

३—त्यजिगम्योः पर्यायितापत्तिः।

४—द्व्यर्थः पचिरिति भाष्यनिर्देशः।

अत्र किञ्चित्—

(१) अयं सकर्मकाकर्मकविभागो न भाष्यादौ, न वा वाक्यपदीयादौ प्रदर्शितः, न च सूत्रकारादीनां वचनैर्ज्ञापितः। केवलं मध्येकालं जातानां वैयाकरणानां व्यवस्था। नागेशैश्च 'अध्यासिता भूमयः' इत्यादावव्याप्तिं प्रदर्श्य दोषो दर्शित एव। तथा च तेषां मते 'एतच्छास्त्रीयकर्मसंज्ञकान्वय्यर्थकत्वं सकर्मकत्वम्', 'तदनन्वय्यर्थकत्वमकर्मकत्वम्'[१] इति। एतेन सकर्मकाकर्मकविभागार्थं धातोर्न फलवाचकत्वमावश्यकम्।

(२) नैयायिकानां मते यत्नस्य घटेऽसत्त्वेन न स्यादयं प्रयोगः, किन्तु वैयाकरणानां नये व्यापारः कर्मणि तिष्ठत्येव, तथा च कर्मकर्तरि 'क्रियते घटः' इति प्रयोगः स्यादेव। प्राप्ये कर्मणि च कर्मवद्भावो न भवतीति भूषणकृतैव सिद्धान्तितम्[२]।

(३) कर्तुः प्रवृत्तिश्च क्रियायां फलार्थम् ('ग्रामं गच्छति' इत्यत्र ग्रामप्राप्त्यर्थम्), अतो न सर्वेषां व्यापाराणामेकरूपता। समानेऽपि त्यजिगम्योश्चलनात्मके व्यापारे कर्तुः प्रवृत्त्यैव क्रियाभेदः सम्पद्यते। कश्चिद् व्यापारः किञ्चित् फलं जनयति, कश्चिच्च किञ्चिद् इति व्यापारसामर्थ्यादपि क्रियासामर्थ्यभेदो भवति। व्यापारः फलमुत्पादयति, किन्तु तस्य धातुवाचकत्वं नास्तीतीदमपीह बोध्यम्।

(४) अत्र भाष्यम्—'इह हि तण्डुलान् पचतीति द्व्यर्थः पचिः तण्डुलान् पचन्नोदनं निर्वर्तयति'[३] इति। अत्र कैयटः—'तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः', तथा चात्र द्वौ व्यापारौ धात्वर्थः, न त्वेकं फलं द्वितीयश्च व्यापारः। पचधातोर्हि व्यापारद्वयावाचकत्वस्वीकारे द्व्यर्थः पचिरिति भाष्यमेवासङ्गतं स्यात्, त्वन्मते सर्वेषामेव धातूनां भाष्यफलव्यापारवाचकत्वेन द्व्यर्थत्वात्। अधुना भाष्यसम्मतं धात्वर्थमाह—

तत्र धातुसंज्ञासूत्रे[१] भाष्ये धात्वर्थज्ञापकं वार्त्तिकद्वयम्—(१) क्रियावचनो धातुः। (२) भाववचनो धातुः। क्रिया खलु व्यापार एव। भावोऽपि किञ्चिद्वैचित्र्यं दधानो व्यापार एव। अत्र न काचन फलविषयिणी चर्चा। व्यापार एव धात्वर्थः। अत्र अन्वय-

---

१. वैयाकरणसिद्धान्तपरमलघुमञ्जूषा, धात्वर्थप्रकरणम्।

२. वैयाकरणभूषणसारः, धात्वर्थनिर्णयः।

३. महाभाष्यम्—१।४।४९ कर्तुरीप्सिततममिति सूत्रे।

१. महाभाष्यम्—१।३।१ भूवादयो धातवः।

व्यतिरेकाभ्यामर्थदर्शनपरं भाष्यमेव प्रमाणम्—"इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते पच्छब्दश्चकारान्तः" अतिशब्दश्च प्रत्ययः। अर्थोऽपि कश्चिद् गम्यते विक्लित्तिः कर्तृत्वमेकत्वं च। पठति इत्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी। पच्छब्दो हीयते, पठ्शब्द उपजायते, अतिशब्दोऽन्वयी। अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। विक्लित्तिर्हीयते पठि क्रियोपजायते कर्तृत्वं चैकत्वं चात्रान्वयीति। 'विक्लित्तिर्हीयते पठि क्रियोपजायते' अत्र विक्लित्तिपदेन फलमर्थो न गृह्यते, विक्लित्तेर्व्यतिरेका पठिक्रिया इति भाष्याशयः। अत्र तावद् विक्लित्तिरूपार्थस्य स्थाने पठिक्रिया आदेशत्वेन स्वीकृता इति स्थितिः। यदि चात्र विक्लित्तिः फलं स्यात्, तदा पठ्धातोर्बोधसदृशं किञ्चित् फलमुपात्तं स्यात्, अतो विक्लित्तिरपि व्यापार एव। विक्लित्तिरित्यस्य विक्लेदनमर्थ इति [२]हेलाराजादयोऽपि स्वीचक्रुः।

न च विक्लित्तिः खलु कर्मणि भवति व्यापारश्च कर्तरि, यदि चात्र विक्लित्तिरपि व्यापारः, तदा तण्डुलानित्यस्य कर्मसंज्ञा न स्यादिति वाच्यम्, पचेर्व्यापारद्वयवाचकत्वात्। एकेन व्यापारेण तण्डुला ईप्सिताः, द्वितीयेन चोदन इति न कापि विप्रतिपत्तिः।

भाववचनो धातुरित्युपक्रम्य भाष्यकृता[१] 'षड्भावविकारा भवन्ति इति ह स्माह वार्ष्यायणिः'। 'जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति इति' एतेषु भावविकारेषु परिणामस्यापि भावविकारत्वाद् विक्लित्तिश्च परिणाम एव। 'कारकाणां प्रवृत्तिविशेषः क्रिया[२]' इति भाष्यात् सर्वेषु कारकेषु व्यापारस्य सत्त्वेन कर्मणो व्यापारस्यापि धातुवाच्यत्वात्। यद्यपि व्यापारः सर्वत्र कारकेषु, किन्तु प्राधान्यात् कर्तृकर्मणोर्व्यापार एव धातुवाच्यः, अत एव यदा कर्तृव्यापारविवक्षा, तदा कर्तरि लकारः, यदा च कर्मव्यापारविवक्षा, तदा कर्मणि लकार उत्पद्यते।

स्तोकं पचतीत्यादौ च न व्यपदेशिवद्भावादिकल्पनम्।

स्तोकादीनि च क्रियाविशेषणानि, क्रिया खलु व्यापार एव, अतो नैयायिकानामिव स्तोकादेर्व्यापार एवान्वयः स्वीकर्तव्यः, द्वितीया तु क्रियाविशेषणानां कर्मत्वं क्लीबत्वमेकवचनत्वमिति वचनात्। अस्यापाणिनीयत्वं तु न शक्यम्। "पूजनात् पूजितमनुदात्तम्[३]" इति सूत्रे भाष्ये दारुणाध्यापको दारुणं यदध्यापनं तस्य कर्त्ता इत्यर्थे दारुणादिक्रियाविशेषणानामध्यापकादिभिः सामानाधिकरण्याभावात् समासाभावे दारुणाध्यापक इत्यत्र मलोपार्थवार्त्तिककारस्य वचनम्। एतेन क्रियाविशेषणे द्वितीया वार्त्तिककारस्य सम्मता। अन्यथा मकारलोपार्थं वार्त्तिकारम्भ एव न स्यात्। लिङ्गसंख्ययोरुत्पत्तिस्तु व्यापारेऽन्वयादेव

---

२. वाक्यपदीये क्रियासमुद्देशः १।
१. महाभाष्यम्—१।३।१।
२. तदेव
३. महाभाष्यम्—८।१।६७।

भावप्रत्ययवन्न भवति। व्यापारेऽन्वयादेव 'मन्दं मन्दं नुदति पवनः' इत्यादयः प्रयोगा संगच्छन्ते। स्तोकादयश्च यदि फलम्, तदा फलस्य सिद्धरूपत्वेन सत्त्वभूतत्वात् क्लीबत्वमेक-वचनत्वमेव न स्यात्, द्विवचनादयोऽपि स्युः। यदि च क्रमश्चेति[1] सूत्रस्थभाष्यमादाय भावकर्मवृत्ताद्धातोरित्यर्थं पुरस्कृत्य नागेशसम्मतः क्रियात्वक्रियाकालकारकसंख्येति पञ्चकं धात्वर्थः, तिङादयश्च द्योतकाः, तथापि न फलस्य धातुवाचकत्वम्।

येऽपि धातोः फलावाचकत्वेन कर्तुरीप्सिततममिति सूत्र ईप्सिततममित्यस्य प्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वमीप्सिततमत्वमित्येवंविधोऽर्थो न स्यादित्याहुः, तेऽप्येवं वक्तव्या यदयं परिष्कारो धातोः फलमर्थ इति स्वीकृत्य प्रवृत्तः, फलाश्रयश्च कर्मसंज्ञेति न कस्यापि मुनेर्वचनम्।

वाक्यपदीयग्रन्थश्च 'धात्वर्थः' क्रिया' इति निश्चित्य प्रवर्तते।

अत एव वाक्यपदीये न भूपणादिवद् धात्वर्थसमुद्देशः, अपि तु क्रियासमुद्देशः। तत्र प्राधान्येन क्रियास्वरूपमेव प्रदर्शितम्। तेषु च व्यापारव्यक्तिः क्रिया, जातिः क्रिया, सत्ता क्रिया, बुद्धिसत्ता क्रिया, ब्रह्मसत्ता क्रिया, एवं मतान्तरैः क्रियास्वरूपं प्रदर्शितम्। यद्यपि आचार्यो हरिः[3] फलार्थकर्तुः क्रियायां प्रवृत्तिरिति स्वीकरोति, तथापि तत्फलं न धातुवाच्यम्, किन्तु व्यापारसामर्थ्यजन्यम्। इदं च फलं न विक्लित्त्यादि, अपि तु पाणिन्यादिभिः 'अभिप्राये क्रियाफले' इत्यत्रोपात्तं फलम्। धातोः फलावाचकत्वे हेलाराजस्य उक्तिरपि[4]। साध्यस्वभावा क्रिया धातुवाच्या। न हि संयोगविभागात्मकः सिद्धस्वभावोऽर्थो धातुवाच्यः, साध्यतया पूर्वापरीभूतत्वेनावगमात्। हेलाराजस्य क्रियाविवेकोऽद्य नोपलभ्यते, केवलं क्रियासमुद्देशस्य टीकात एव को धात्वर्थ इत्यवगन्तुं शक्यते। अत्रास्माभिर्विस्तरभयान्नाधिकं प्रदर्शितम्। वाक्यपदीये च धात्वर्थः कः? अत्रेयमेव कारिका—"भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः"।



१. महाभाष्यम्, क्रमश्चेति सूत्रे ७।२।३७

२. लघुशब्देन्दुशेखरे कारकप्रकरणेऽनभिहित इति सूत्रे

३. वाक्यपदीयम्, क्रियासमुद्देशः ४०

४. वाक्यपदीयम्, क्रि० स० १

# योगदर्शने ईश्वरविमर्शः

सोहं प्रकाशः,

अनुसंधाता, का० हि० वि० वि०

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" ( गीता १८।६१ ) इति भगवद्वचनादीश्वरो व्यापकोऽपि सत् हृद्देशस्यैवाभिव्यञ्जकत्वेन समग्रप्राणिनां हृत्स्थाने तिष्ठन् कस्य सहृदयस्य हृदयं नाह्लादयति। अत एव हृद् अयते व्याप्नोति परमात्मेति हृदयशब्दस्यार्थो-घटते। तदुक्तमभियुक्तैः--

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः॥

हरिरित्यादयः शब्दा अपि तस्यैव पर्यायाः—

हरिः सदाशिवो ब्रह्मा महेन्द्रः परमः स्वराट्।
सर्वेश्वरस्य तस्यैते पर्यायाः परिकीर्तिताः॥

"अहं सुखी स्याम्" इति निखिललोकस्य नैसर्गिको महानभिलाषो वरीवर्ति, तदर्थमाध्यात्मिकादिविविधदुःखनिवृत्तये सततं पुरुषः प्रयतते। दार्शनिकदृष्ट्या—ऐकान्तिकात्यन्तिकदुःखनिवृत्तिर्मोक्षः, स्वस्वरूपावाप्तिर्वा, तत्प्राप्तये चानेकोपायाः प्रदर्शिता दार्शनिकैः। तद्यथा—नैयायिकाः प्रमाणप्रमेयादीनां पदार्थानां तत्त्वज्ञानान्मोक्षमभ्युपगच्छन्ति। वैशेषिकाणामप्येष एव पन्थाः। सांख्या हि सत्त्वपुरुषान्यताख्यातिद्वारा मोक्षं मन्यन्ते। मीमांसकानान्तु भिन्नैव मीमांसा, ते हि वैदिककर्मणामनुष्ठानेनान्तःकरणशुद्धिद्वारा मोक्षमङ्गीकुर्वन्ति। "ऋते ज्ञानान्न मुक्तिः" इत्यादिश्रुत्या ब्रह्मज्ञानादेव मुक्तिर्भवितुमर्हति, नान्यथेति वेदान्तिनो वदन्ति। योगमते तु कैवल्यप्राप्तेर्मूलसाधनं समाधिरेव। समाधिश्च चित्तैकाग्र्यरूपः, चित्तैकाग्र्याभ्यासवैराग्यादयोऽनेकोपाया अभिहिता योगदार्शनिकैः। तेष्वीश्वरप्रणिधानमपि प्रमुखोपायो वर्तते, निर्विकल्पकसमाधिलाभाय। तदुक्तं पतञ्जलिना "ईश्वरप्रणिधानाद्वा" ( योगसूत्र० १।२३ )।

भक्तिविशेषेणाकृष्ट ईश्वरोऽनुगृह्णाति। प्रसन्न ईश्वरे समाधिलाभाय क्रमिको मार्गो नापेक्षितः। उक्तप्रणिधानशब्दस्य 'प्रकर्षेण चित्तस्य निधानम्' इति व्युत्पत्त्या सम्यक् प्रकारेणैकत्र चित्तस्य संयोजनमेव भक्तिरुच्यते। व्यासदृष्ट्या सर्वक्रियाणां परमगुरावर्पणम्, समग्रकर्मणां फलत्यागो वा भक्तिरभिधीयते। ( योगद०, व्या० भा०-२।१ )। सा चान्यत्र शास्त्रेषु नवधा प्रकीर्तिता—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
(श्रीमद्भा० ७।५।२३)

भक्त्या तुष्टो हि भगवान् भक्तानाम् "ईप्सितस्याभिमतमस्तु" इतीच्छामात्रेण योगापायान् दूरीकृत्य समाधिसिद्धिं प्रयच्छति । तदुक्तं भगवता—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥
( गीता० ९।२२ )

कर्मणामर्पणविषये—

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
( गीता० ९।२७ )

कर्मफलत्यागविषयेऽपि—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥
( गीता० २।४७ )

एकमपीश्वरं स्वकल्याणचिकीर्षया विभिन्नरूपेणोपासते तज्ज्ञाः, तथाहि—

जगतां यदि न कर्ता कुलालेन विना घटः ।
चित्रकारं विना चित्रं स्वत एव भवेत्तदा ॥

इत्याभाणकेन जगत्कर्तेति नैयायिकाः समानतन्त्रसिद्धान्ता वैशेषिकाश्च, आदिविद्वान् सिद्ध इति कापिलाः, उपास्यत्वेन देशित इति मीमांसकाः, "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० उ० २।१ ) इत्यादिश्रुत्या सच्चिदानन्दस्वरूप इति वेदान्तिनः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः ।

यद्यपि पतञ्जलेरीश्वरस्य स्वरूपमुपयोगो गरिमा च सुगमतया नैवावगन्तुं शक्यते, तथापि व्यासवाचस्पतिप्रभृतिविविधविद्वद्धौरेयाणां मतं सम्यगालोच्य याथार्थ्यं प्रकटयितुं प्रयतिष्यते । योगदर्शने नित्यः, सर्वज्ञः, सर्वाधिकज्ञानशक्तिसम्पन्नः, सर्वव्यापी, क्लेशकर्मविपाकाशयरहितः, पुरुषविशेषः, ईश्वर इति परिभाषितः । तथाहि प्रकृतिपुरुषव्यतिरिक्तमीश्वरमुद्घोषयन् पतञ्जलिः "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" ( यो० सू० १।२४ ) इतीश्वरस्वरूपोपपादकं सूत्रं बभाषे ।

अनेन सूत्रेण—बद्धमुक्तप्रकृतिलीनपुरुषेभ्यो विशिष्टः पुरुषविशेष ईश्वर इति ध्वन्यते । तथाहि "अविद्याऽस्मितारागद्वेषाभिनिवेशाः" ( यो०सू० २।३ ) इति पञ्चक्लेशैरपरामृष्टोऽपि पुरुषःस्वाश्रयप्रतिबिम्बितत्वसम्बन्धेनात्मन्यभिमन्यमानो रागद्वेषादिना प्रवृत्तः सन् शुभाशुभानिकर्माणि कुरुते, ततश्च पापपुण्यकर्मणां फलं जात्यायुर्भोगरूपविपाकमुपलभते, विविधविपाकानुसारञ्च तस्य तादृशी वासना समुत्पद्यते, वासनया च जन्ममरणसंसारार्णवे भ्रमति, किन्तु यथा पुरुषो मानसिकान् क्लेशादीनात्मन्यध्यवस्यति, न तथेश्वर इति तस्य वैशिष्ट्यम् ।

मुक्तपुरुषाः प्रकृतिलीनाश्च न कथमपीश्वरपदवीमारोढुं शक्नुवन्ति, यतो हि ते प्राकृतिक-वैकारिक-दाक्षणिकबन्धनानि छित्त्वा कैवल्यमुपलब्धवन्तः । मुक्तपुरुषाणां

यद्यप्युत्तरकाले बन्धनं नास्ति, तथापि तेऽवश्यं मुक्तावस्थातः प्राग् बन्धन आसन्। एवञ्च तत्त्ववैशारद्याम् ( १।१९) उद्धृतस्य—

पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते॥

इति वायुपुराणवचनानुसारं प्रकृतिलीना अपि सहस्रवर्षपर्यन्तं पूर्णमवधिं व्यतीत्य भविष्यति काले बन्धने निपतन्त्येव, ईश्वरस्य तु पूर्वोत्तरायाः कोटेः चर्चैव न, स तु सदैव मुक्तः। ज्ञानक्रियाशक्त्यतिशयरूपा सम्पदेव तस्यैश्वर्यम्। यद्यपि चेतन ईश्वरे ज्ञानक्रियादीनामसम्भवः, ज्ञानक्रियादीनां विशुद्धचित्तधर्मत्वात्, चित्तेन सह नित्ययुक्तस्येश्वरस्य स्व-स्वामिभावसम्बन्धोऽपि न घटते, सम्बन्धस्याविद्याप्रयुक्तत्वात्, अविद्यायाश्चेश्वरेऽभावात्, तथापि पुरुषवदीश्वरस्य चित्तेन सह स्वस्वामिभावसम्बन्धोऽविद्यया नैव संगच्छते, किन्त्वीश्वरश्चित्तस्वभावमवगच्छन् प्राणिनामुद्धारं चिकीर्षया विशुद्धसत्त्वरूपचित्तमाधत्ते, अतो ज्ञानपूर्वक एव द्वयोरनादिः सम्बन्धः।

यद्यप्युद्दिधीर्षायां सत्यामीश्वरो विशुद्धसत्त्वचित्तमुपाधत्ते, चित्तोपादाने सति चोद्दिधीर्षा इत्यन्योऽन्याश्रय आपतति, तथापि बीजाङ्कुरवत्सृष्टिप्रवाहस्यानादित्वेन तद् दोषाय न कल्पते। तथाहि लोके पुरुषः "अहं प्रभाते शीघ्रमुत्थायामुकं कार्यं करिष्यामि" इति विनिश्चित्य स्वपिति, प्रभाते च तेनैव संस्कारेणोत्थाय कार्यं सम्पादयति, तथैवेश्वरोऽपि प्रलयकाल आहार्यचित्तेन "प्रलयावधौ समाप्तौ सत्यां विशुद्धचित्तं ग्रहीष्यामि" इति निश्चित्य स्वरूपावस्थितो भवति, चित्तञ्च प्रकृतौ प्रविलीयते, प्रलयावधौ समाप्तौ सत्यामीश्वरः पूर्वसंस्कारेण भूयो विशुद्धं चित्तं गृह्णाति। अत्रेदमवधेयं यदीश्वरस्य प्रलयान्ते कृतः संकल्पः प्रलयादौ गृह्यमाणं चित्तं प्रति कारणम्, तात्कालिकं प्रलयान्ते कृतं संकल्पं भाविप्रलयादौ चित्तग्रहणं प्रति कारणम्, एष च प्रवाहोऽनादिः, एष एवेश्वरस्यालौकिको महिमा, शाश्वतिकः सत्त्वोत्कर्षश्च।

व्यासेनेश्वरस्य सर्वज्ञत्वादिरूप ऐश्वर्ये किं प्रमाणमिति शङ्कां समुद्भाव्य शास्त्रं प्रमाणमिति निर्धारितम्, पुनश्च शास्त्रस्य स्वतःप्रामाण्ये किं प्रमाणमिति प्रश्नमुत्थाप्य प्रकृष्टसत्त्वनिमित्तमिति समासाधितम्। ईश्वरसद्भावे वेदः प्रमाणम्, वेदप्रामाण्ये चेश्वरस्य हेतुत्वमित्यन्योऽन्याश्रयदोषश्चेश्वरस्य विशुद्धचित्ते विद्यमानयोः शास्त्रोत्कर्षयोरनादिः सम्बन्ध इति सङ्केतेन परिहृतः।

सर्वतन्त्रस्वतन्त्रेण दार्शनिकशिरोमणिना वाचस्पतिनात्र समीचीना सरणिरनुसृता—ईश्वरः सर्वज्ञो यथार्थवक्ता च, अतस्तेनोपदिष्टे वेदेऽप्रामाण्यगन्धोऽपि न वर्तते। वेदस्यैको भाग आयुर्वेदात्मकः, स चेश्वरनिर्मितः, तत्र हि रोगः, रोगहेतुः, आरोग्यम्, भैषज्यमिति विवेचनमुपलभ्यते, अतस्तत्प्रयुक्तेन विधिना ओषध्यादिसेवनेन रोगनिवृत्तिरनुभवगोचरतामायाति, अतस्तस्य प्रामाण्ये नास्ति संशयलेशोऽपि। इत्थञ्चैकभागस्य प्रामाण्ये सिद्धेऽन्यस्यापि वेदभागस्येश्वरप्रणीतत्वं प्रमाणत्वञ्च प्रसिध्यति। न्यायदर्शनेऽपि—"तदप्रामाण्यमनृतव्या-

घातपुनरुक्तदोषेभ्यः" ( न्या० द० २।१।५७ ) इति वेदाप्रामाण्यशङ्कामुद्भाव्य "न कर्तृकर्मसाधनवैगुण्यात्" ( न्या० द० २।१।५८ ) इति समाधाय "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रमाणत्वात्" ( न्या० द० २।१।६८ ) इत्यनेन सूत्रेण वेदस्येश्वरप्रणीतत्वेन प्रामाण्यमुद्घोषितम् ।

योगदर्शन ईश्वरसाधने प्रयुक्ता युक्तिरतीव समीचीना प्रतीयते यद् यत्रैश्वर्यस्य परा काष्ठा वर्तते, स ईश्वरः, ईश्वरतुल्यो नान्यः कश्चिद् । द्वयोरङ्गीकार एको वदति—"नवमिदमस्तु" अपरश्च "पुराणमिदमस्तु" इत्यत्रैकस्य मनोरथसिद्धावितरस्य च सङ्कल्पव्याघातादल्पैश्वर्यमापद्येत, तथा च पूर्वोक्तेश्वरस्वरूपप्रतिज्ञाहानिः, द्वयोश्चेच्छापूर्तिर्नसम्भवितुमर्हति, एकस्मिन्नेव काले नवीनप्राचीनतयैकस्मिन्नेव पदार्थे स्वभावविरुद्धत्वात् । इत्थञ्चेश्वरस्य साम्यातिशयरहितमैश्वर्यं विज्ञेयम् ।

सामान्यपुरुषाणां यत्किञ्चिद् वर्तमानविषयकं भवति, तत् सेन्द्रियम् । ईश्वरे त्विन्द्रियादिकं विनैव क्रमेणाक्रमेण च त्रिकालविषयकं ज्ञानं विवर्धमानं सन्निरतिशयमस्ति । तत्र सर्वज्ञताया बीजं निरतिशयं ज्ञानस्य परा काष्ठा च विद्यते ।

ईश्वरस्य संज्ञादिविशेषज्ञानं वायुपुराणादिशास्त्रतोऽनुसन्धेयम्—

सर्वज्ञतातृप्तिरनादिबोधः स्वतन्त्रतानित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥
( वा० पु० १२।३१ )

तथा च—

ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ।
( वा० पु० १०।६५।६६ )

नित्यतृप्तस्येश्वरस्य प्राणिनामुद्धरणे स्वार्थाभावेऽपि भूतानुग्रहः प्रयोजनम् । "आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" ( न्या० भा० १।२५ ) इति पञ्चशिखाचार्येणापि समर्थितम् ।

ईश्वरो हि शोकसागरे निमग्नानां प्राणिनां दीनामवस्थामवलोक्य ज्ञानधर्मोपदेशद्वारोद्धारं करोति, पुरुषाणां क्लेशकर्मविपाकाशयप्रयुक्तमौपाधिकं सम्बन्धञ्च निवर्तयति । पुरुषाणामौपाधिकसम्बन्धनिवर्तनमेव तेषामुद्धारः, अन्यथा यद्यात्मस्वभावतो मलिनोऽस्वच्छो विकारी च स्यात्; तर्हि तस्य जन्मान्तरशतैरपि मुक्तिर्न भवेत् । तदुक्तं विज्ञानभिक्षुणा—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
नहि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥
( सांख्यप्रवचनभाष्यम् १।७ )

निरतिशयज्ञानत्वादीश्वरो गुरुपदवीमवाप्नोति । ईश्वरः स्वयमेव सृज्यमानसृष्ट्यादौ शास्त्रमाध्यमेन स्ववाचकं प्रणवमोङ्कारमवबोधयति । 'प्रकर्षेण नूयते स्तूयतेऽनेनेति प्रणवः' इति व्युत्पत्त्या प्रणवेन परमेश्वरः स्तूयते । एवञ्च 'अवति रक्षतीति ओम्' इति व्युत्पत्त्या ओङ्कारनाम्ना चेश्वर आकार्यते । तदुक्तम्—

अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योङ्कारः स्मृतं नाम तेनाहूतः प्रसीदति ॥
( यो० द० बालरामोदासीनस्य टिप्पणी १।२७ )

प्रणवजपेनेश्वरस्य च ध्यानेन चित्तमेकाग्रतां सम्पद्यते । अनुमोदितञ्चैतत्—

स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत् ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥
( विष्णुपुराणम् ६।६।२ )

इत्थञ्चेश्वरप्रणिधानेन विघ्ननिवृत्त्या समाधिलाभपूर्वकमात्मसाक्षात्कारो दर्शितो योगदर्शने । एतदेव हि पतञ्जलेरीश्वरस्य मौलिकोपयोगः । तदुक्तं पतञ्जलिना—"समाधिसिद्धिरीश्वरप्रणिधानात्"—( योगसूत्र २।४५ ) ।

स्वल्पेनैव विचारेण प्रीतोऽस्तु परमेश्वरः ।
तस्य सत्ताऽवबोधार्थं निबन्धो रचितो मया ॥



# मत्स्यपुराणविषयानुक्रमणी

प० श्रीरामगोविन्दशुक्लः

अनुसन्धानसहायकः, वाराणसेय-संस्कृत-विश्वविद्यालयः

## अवतरणिका

प्रचण्डताण्डवाटोपे प्रक्षिप्ता येन दिग्गजाः।
भवन्तु विघ्नभङ्गाय भवस्य चरणाम्बुजाः॥

भगवतोऽनुग्रहेण छिन्ने पराधीनतापाशे उदिते च स्वातन्त्र्यसूर्ये यत्र तत्र विकचमानेषु संस्कृतिकमलेषु काशिराजस्थापिता तदनुबन्धेन राज्यशासनसञ्चालिता राजकीयसंस्कृतपाठशालाऽपि काशिकाभिजनयोरम्बिकाचरणसेवारतयोः उत्तरप्रदेशशासनकर्णधारयोर्मुख्यमन्त्रिशिक्षामन्त्रिपदे नियुक्तयोः श्रीसम्पूर्णानन्दश्रीकमलापतित्रिपाठिनोरमलमतौ ब्रह्मणो मतौ पुराणानामिव वाराणसेयसंस्कृतविश्वविद्यालयस्थापनसङ्कल्पः प्रथमं प्रादुरभवत्।

कृतिनः सत्यसंकल्पा भवन्तीति सत्योऽयं लोकप्रवादः। यतोऽस्य संकल्पस्य साकारताप्रदानाय विद्वत्कुलप्रसूताः प्रशासननिपुणाः श्री-आदित्यनाथझामहोदयाः प्रथमोपकुलपतिरूपेण प्राप्ताः, यस्यातिशुद्धायां बुद्धौ विविधशिक्षणविभागविकासयोजनास्वनुसन्धानसंस्थानयोजनापि पुष्पिता फलिता चाभूत्।

अधुनानुसन्धाने, तन्निर्देशने, सम्पादने, अनुवादे च सर्वथा दत्तावधानेऽस्मिन् विभागे नियुक्तेषु सहायकेषु मयापि—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः॥
मत्स्य० ३।३।४

इति वचनमनुसृत्य प्रथमं निर्मीयमाणासु पुराणविषयानुक्रमणिकासु मत्स्यपुराणस्येयं विषयानुक्रमणिका भवतां करगतीक्रियते। तत्रास्याः निर्माणे प्रकाशितयोर्द्वयोः संस्करणयोः समादरः कृतः। तत्र प्रथमं गुरुमण्डलग्रन्थमाला ५, क्लाइव रोड, कलकत्ताप्रकाशितम्, अपरञ्च खेमराजपुस्तकालयबम्बईप्रकाशितम्।

अत्र पुराण आदिराजेन मनुना सह मत्स्यस्य संवादो वर्तते। तथा—

कथं ससर्ज भगवान् लोकनाथश्चराचरान्।
कस्माच्च भगवान् विष्णुर्मत्स्यरूपत्वमाश्रितः॥
भैरवत्वं भवस्यापि पुरारित्वञ्च गम्यते।
कस्य हेतोः कपालित्वं जगाम वृषभध्वजः॥
मत्स्य० १।७।८

एषामेव प्रश्नानां समाधानमत्र पल्लवितं विराजते।

तत्र पुराणानि सात्त्विकराजसतामसभेदेन त्रिविधानि। यथा—

मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च।
आग्नेयं च षडेतानि तामसानि निबोध मे॥

इति पद्मपुराणवचनेन तामसपुराणेष्वस्य गणना। गरुडपुराणे त्वस्य सत्त्वाधमत्वं स्वीकृतम्। तथा च—

सत्त्वाधमे मात्स्यकौर्मे तथाहुर्वायुं चाहुः सात्त्विकमधमञ्च। (ब्रह्मकाण्डे १।५२)

यथा तथा वा भवतु। अस्य पुराणस्य धर्मशास्त्रनिबन्धेषु सर्वत्र समादरः दृश्यते। येनेदं धर्मशास्त्रिणां विचारकाणामनुसन्धतॄणां च महते मोदाय। मन्येऽनेन कर्मणा भगवान् व्यासोऽवश्यं तुष्टो भविष्यतीति विरमामि।

| मुख्यो वक्ता | मुख्यः श्रोता |
|---|---|
| मत्स्यः | मनुः |
| सूतः | ऋषयः शौनकादयः |
| अत्र अध्यायाः | श्लोकाः गणनया |
| २९० | १३०३१ |

मत्स्यपुराणानुसारं तु—

अधिकृत्याब्रवीत् सप्तकल्पवृत्तं मुनीश्वराः।
तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश॥
५३।५०

# विषय-सूची

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
मन्वन्तरानुकथनं पुराणं पञ्च लक्षणम्॥

१. सर्गः—सृष्टिः ( सा च मानसी, प्राकृतिका, शारीरिकी, मैथुनी चेति )
२. प्रतिसर्गः—प्रलयः ( खण्डप्रलयः, महाप्रलयश्च )
३. वंशः—वंशः वंशानुचरितञ्च।
४. मन्वन्तराणि—( काल-युग-मन्वन्तराणि कल्पाः )
५ मन्वन्तरानुकथनम्—( दान-धर्म-श्राद्ध-वर्णाश्रमेष्टापूर्तानि )

## सङ्केतः

अत्र प्रथमोऽङ्कोऽध्यायसूचकः
द्वितीयश्च श्लोकसूचकः। यथा ४।७३

# मत्स्यपुराण-विषयानुक्रमणी

—क्रमशः

# गरुडपुराणविषयानुक्रमणी

## सङ्कलयिता—पं० मध्वाचार्यः

( पूर्वाङ्कतोऽनुवृत्ता )

—क्रमशः

## 'दी जर्नल आफ दि रायल एशियाटिक सोसाइटी, लन्दन'

इति पत्रिकायाः—१ बन्धात् १०२ बन्धं ( १८३४-१९७० ईसाब्दं च ) यावत्

# प्रकाशितप्राच्यविद्याविषयाणां सूची

सङ्कलयिता—श्रीउमाशङ्करत्रिपाठी

( पूर्वाङ्कादनुवृत्ता )

३. चरक-सुश्रुतसंहितयोर्मूलारम्भविवेचनम्

( आन ऐन ओरिजिन आफ दि चरक ऐण्ड सुश्रुत संहिताज On an Origin of the Caraka and Su'ruta saṅhitās. )

—रेन्होल्ड एफ्० जी० मूलर Reinhold F. G. Muller.

[ न्यु सि०, बन्धः ६५, १९३३ ], पृ० ३२३-३२८ ( पृ० ६ )

४. प्राचीनभारतीयायुर्वेदे ज्ञानार्जननिरूपणम् : ४ । तत्र चरकसंहिताया निबन्धननिचित्रणं तथा प्राचीन-भारतीयायुर्वेदग्रन्थकाराणां साहित्यिकरीतिप्रदर्शनम् ।

( स्टडीज इन ऐन्सिएण्ट इण्डियन मेडिसिन; ४. दि कम्पोजीशन आफ दि चरक-संहिता, ऐण्ड दि लिटरेरी मेथड्स आफ दि ऐन्सिएण्ट इण्डियन मेडिकल राइटर्स Studies in Ancient Indian Medicine; IV.—The Composition of the Caraka Saṅhitā, and the Literary Methods of the Ancient Indian Medical Writers.

—ए० एफ्० रुडाल्फ हार्न्ले A. F. Rudolf Hoernle.

[ न्यु सि०, बन्धः ४०, १९०८ ], पृ० ९९७-१०२८ ( पृ० ३२ )

५. प्राचीन-भारतीयायुर्वेदे ज्ञानार्जननिरूपणम् : ५ । बोवर-हस्तलिखितग्रन्थस्य अनुकूल-पक्षे चरकसंहिताया निबन्धनचित्रणम्

( स्टडीज इन ऐन्सिएण्ट इण्डियन मेडिसिन: ५ । दि कम्पोजीशन आफ दि चरकसंहिता इन दि लाइट आफ दि बोवर मैन्युस्क्रिप्ट Studies in Ancient Indian Medicine; 5. The Composition of the Caraka Saṁhitā in the light of the Bower Manuscript. )

—ए. एफ्. रुडाल्फ हार्न्ले A. F. Rudolf Hoernle.

[ न्यु सि. बन्धः ४१, १९०९ ], पृ. ८५७-८९४ ( पृ. ३८ )

## सांख्यदर्शनम्

१. त्रिपिटकेऽन्तर्भूतानां बौद्धग्रन्थानां मध्यस्थस्य सांख्यकारिकादेः चीनभाषानुवाद-निरूपणम्, तथा अन्यकार्यद्वयनिरूपणं च

( आन ए चाइनीज वर्सन आफ दि सांख्यकारिका, एटसेट्रा, फाउण्ड एमङ्ग दि बुद्धिस्ट बुक्स कम्प्राइजिंग दि त्रिपिटक, एण्ड टू अदर वर्क्स—On a Chinese Version of the Sāṅkhya Kārikā, etc., found among the Buddhist Books Comprising the Tripitaka, and two other works. )

—रेव. सैमुएल बील, एम. ए. The Rev. Samuel Beal, M. A.

[ न्यु सि., बन्धः १०, १८७८ ], पृ. ३५५-३६० ( पृ. ६ )

२. योगसूत्राणां तिथिनिर्धारणविवेचनम्

( दि डेट आफ दि योग-सूत्राज The Date of the Yoga-Sūtras. )

[ न्यु सि., बन्धः ६२, १९३० ], पृ. ३६५–३७६ ( पृ. १२ )

## वैशेषिकदर्शनम्

१. किं वैशेषिकदर्शनं स्वीकरोति देवत्वम्, वा न वा ?

( डज दि वैशेषिक फिलासफी एकनालेज ए डीटी, आर नाट् ? Does the Vaiśeshika Philosophy acknowledge a Deity, or not ? )

—जे. मूर, एस्क., डी. सी. एल्., एल् एल्. डी. J. Muir, Esq., D. C. L., LL. D.

[ बन्धः २०, १८६३ ], पृ. २२–३० ( पृ. ६ )

## वेदान्तदर्शनम्

१. अभिनवगुप्तस्य परमार्थसारविवेचनम्

( दि परमार्थसार आफ अभिनवगुप्त The Paramarthasara of Abhinava-Gupta.

—एल्. डी. बर्नेट L. D. Barnett.

[ न्यु सि., बन्धः ४२, १९१० ], पृ. ७०७–७४८ ( पृ. ४२ )

२. उपनिषत्सु 'आत्मा' इत्येतस्य सिद्धान्तप्रदर्शनम्

[ दि थियरी आफ 'सोल' इन दि उपनिषद्स The Theory of "Soul" in the upanishads. )

[ न्यु. सि. बन्धः ३१, १८९९ ], पृ. ७१–८७ ( पृ. १७ )

३. गौड–पूर्णानन्दचक्रवर्तिनस्तत्त्वमुक्तावली । सम्पादितानूदिता च

( दि तत्त्वमुक्तावली आफ गौड-पूर्णानन्दचक्रवर्तिन् । एडिटेड एण्ड ट्रान्स्लेटेड The Tattva-Muktāvali of Gauḍa-pūrṇānanda-chakravartin. )

—प्रोफेसर इ. बी. कावेल, एम्. आर. ए. एस्. Professor E. B. Cowell, M. R. A. S.

[ न्यु सि., बन्धः १५, १८८३ ], पृ. १३७–१७३ ( पृ. ३७ )

४. दक्षिणभारतीय-विशिष्टाद्वैतवैष्णवविद्यालयस्य दक्षिणविदुषाम् उत्तरविदुषां च मध्ये वादविषयकभेदेषु अष्टादशभेदनिरूपणम्

( दि अष्टादश भेदाज, आर दि एटीन प्वायण्ट्स आफ डाक्ट्रिनल डिफरेन्सेज बिटवीन दि टेङ्गलइस ( सदर्नर्स ) ऐण्ड दि वदगलइस ( नार्दर्नर्स ) आफ दि विशिष्टाद्वैत वैष्णव स्कूल, साउथ इण्डिया The Aṣṭāda'a-Bhedas, or the

Eighteen Points of Doctrinal Differennces between the tengalais ( Southerners ) and the Vadagalais ( Northerners ) of the Visistadvaita Vaisnava School, South Iudia. )

—ए. गोविन्दाचार्य, एम् आर. ए. एस्. A. Govindacarya, M. R. A. S.

[ न्यु सि., बन्धः ४२, १९१० ], पृ. ११०३–११५४ ( पृ. ५२ )

५. ब्रह्मणो वेदान्तविषयकविचारे प्रश्नोत्तरसमाख्यानम्

( ए डाइलाग आन दि वेदान्तिक कन्सेप्शन आफ ब्रह्म A Dialogue on the Vedantic conception of Brahma. )

– प्रमदादासमित्र, भूतपूर्वः 'गवर्नमेण्ट कालेज, बनारस' इत्यस्य ऐङ्ग्लो-संस्कृत-विभागस्य कार्यकारी प्राध्यापकः Pramadā Dāsa Mittra, Late Officiating Professor of Anglo-Sanskrit, Government College, Benares.

[ न्यु सि., बन्धः १०, १८७८ ] पृ. ३३-४८ ( पृ. १६ )

६. मोक्षो वेदान्तात्मिका मुक्तिर्वा

( मोक्ष, आर दि वेदान्तिक रिलीज Moksha, or the Vedāntic Release. )

—द्विजदास दत्त Dvijadas Datta.

[ न्यु सि., बन्धः २०, १८८८ ], पृ. ५१३–५३६ ( पृ. २७ )

७. वेदान्तविषयक-सन्न्यासिनां संघटननिरूपणम्

(दि आर्गनाइजेशन आफ दि सन्न्यासीज आफ दि वेदान्त The Organization of the Sannyasis of the Vedanta. )

—जे० एन्० फर्कुहर, एम० ए०, डी० लिट्० ( आक्सन० ) J. N. Farquhar, M. A., D. Litt. ( Oxon. )

[ न्यु सि०, बन्धः ५७, १०२५ ], पृ० ४७६-४८६ ( पृ० ८ )

## भक्तिशास्त्रम्

१. डकनप्रदेशीयानां बौद्धवैष्णवानां विठ्ठलभक्तानां वा विवेचनम्

( ऐन एकाउण्ट आफ दि बौद्ध-वैष्णवाज, आर विठ्ठल-भक्ताज आफ दि डकन An Acconnt of the Bauddha-Vaishnavas, or Vitthal-Bhaktas of the Dakkan. )

—रेव० जे० स्टेवेनसन, डी० डी० The Rev. J. Stevenson, D. D.

[ न्यु सि०, बन्धः ७, १८४३ ], पृ० ६४-७३ ( पृ० १० )

## बौद्धदर्शनम्

१. अनुवाद-टीकासहितं नमस्कारविवेचनम्

( दि नमक्कार, विथ ट्रान्स्लेशन ऐण्ड कमेण्टरी The Namakkāra, with Translation and Commentary. )

—बी० एल्० सेण्ट-बर्बे, बी० सी० एस्०, B. L. St. Barbe, B. C. S.
[ न्यु सि०, बन्धः १५, १८८३ ], पृ० २१३-२२० ( पृ० ८ )

२. अभिधम्म-पिटकस्य विविधटीकानां च निरूपणम्
( अभिधम्म-पिटक ऐण्ड कमेण्टरीज The Abhidhamma-Pitaka and Commentaries. )
—सी० ए० एफ० रिस डेविड्स C. A. F. Rhys Davids.
[ न्यु सि०, बन्धः ५५, १९२३ ], पृ० २४३-२५० ( पृ० ८ )

३. अवलोकितस्य तथा तस्य सहगामिन्यास्तारायाः "उद्धारिकायाः" भारतीय-बौद्धमत-सम्प्रदायनिरूपणम्, मगधप्रदेशे अवशिष्टांशात् स्पष्टीकृतम्
दि इण्डियन बुद्धिष्ट कल्ट् आफ अवलोकित ऐण्ड हिज कन्सर्ट तारा "दि सेवियरेस्", इलस्ट्रेटेड फ्राम दि रिमेन्स इन मगध The Indian Budbhist Cult of Avalokita and his Consort Tārā "The Saviouress" illustrated from the Remains in Magadha. )
—एल्० ए० वैडेल्, एम्० बी०, एम० आर० ए० एस्० L. A. Waddell, M. B., M. R. A. S.
[ न्यु सि०, बन्धः २६, १८९४ ], पृ० ५१-९० ( पृ० ४० )

४. आद्य-बौद्धलिपिचिह्नेषु अतिरिक्तव्याख्या-निरूपणम्
( फर्दर नोट्स आन अर्ली बुद्धिस्ट सिम्बलिज्म Further Notes On early Buddhist Symbolism. )
—आर० सेवेल, एस्क०, मद्रास सिविल सर्विस, एम० आर० ए० एस०; R. Sewell, Esq., Madras Civil Service, M. R. A. S.
[ न्यु सि०, बन्धः २०, १८८८ ], पृ० ४१९-४२७ ( पृ० ९ )

५. उत्तरीय-बौद्धानां निर्वाणविषयकं विवेचनम्
( दि निर्वान आफ दि नार्दर्न बुद्धिस्ट्स The Nirvana of the Northern Buddhists.
—रेव० जे० एडकिन्स, डी० डी०, आफ पेकिङ्ग The Rev. J. Edkins, D. D. of Peking
[ न्यु सि०, बन्धः १३, १८८१ ], पृ० ५९-७९ ( पृ० २१ )

६. उपासकजनालङ्कारवर्णनम्
( दि उपासकजनालङ्कार The Upasakajanālaṅkāra. )
—एल्० डी० बर्नेट L. D. Barnett.
[ न्यु सि०, बन्धः ३३, १९०१ ], पृ० ८७-९० ( पृ० ४ )

७. एकस्मान्नवीनस्रोतसो बौद्धस्य "जीवनचक्रम्" इत्येतस्य निरूपणम्
( दि बुद्धिष्ट "ह्वील आफ लाइफ" फ्राम ए न्यू सोर्स The Buddist "Wheel of Life" from a New Source. )

—क्रमशः

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. प्रकाशक का नाम | डॉ० भागीरथप्रसाद त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी |
| ४. सम्पादक का नाम | डॉ० भागीरथप्रसाद त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी |
| ५. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, मुद्रणालय, वाराणसी |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथप्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथप्रसाद त्रिपाठी
गवेषणालय-संचालक
वा० सं० वि० वि०, वाराणसी–२

पञ्जीकरणसंख्या — ६९८१।५७

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः पत्रिकायाश्च सोऽङ्को दीयते निबन्द्धे, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. प्रस्तोता वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी–२' इति संकेतेन ('चैकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत-विश्वविद्यालय, वाराणसी–२" इति सङ्केतेन विधेयः।

---

प्रकाशकः–सञ्चालकः, अनुसन्धानसंस्थानम्, वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी–२।
मुद्रकः—मुद्रणालयव्यवस्थापकः, वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी–२।
मु० सं०–४३/७३